शेठ नारायणदास तथा जेठानंद आसनमल पुष्टिमार्गीयग्रन्थमाला. रत्न १२.

॥ श्रीकृष्णाय नमः ॥

विद्वत्केसरिशुद्धाद्वैतसहस्रांशुसर्वतन्त्रस्वतन्त्राद्यनेकोपपदराजिविराजित-
शुद्धाद्वैतसम्प्रदायाचार्यश्रीमद्वल्लभाचार्यवंशविभूषण-
गोस्वामिश्रीमदनिरुद्धाचार्यविरचित-
वेदान्तविद्यालङ्कारभाष्यसमुपबृंहिता

# श्रीमदाथर्वणनारायणोपनिषद् ।

शुक्लोपाह्वश्रीमदोङ्कारशर्मतनुजन्मपण्डितकुलकौस्तुभ-
हरिशङ्करशास्त्रिविरचितया
किरणावल्याख्यव्याख्यया समलङ्कृता ।

सा च

मुम्बापुरीस्थश्रेष्ठिवर्य 'नारायणदास आसनमल ट्रस्ट'द्रव्यादिव्यव-
हारावलोकयितृभिः ट्रस्टद्रव्यव्ययेन मुद्रयित्वा प्रकाशिता ।

मुम्बय्यां निर्णयसागरमुद्रणालये मुद्रिता ।

सन १९४३, श्रीवल्लभाब्द ४६५.

# प्रस्तावना

आ नारायणउपनिषद्भाष्यना कर्ता गोस्वामी श्रीअनिरुद्धलालजी बेटशंखोद्धारमां संवत् १९४७ ना भाद्रपद शुक्ल द्वादशी ( वामनजयंती ) ने दिने श्रीमुरलीधरजीने त्यां श्रीरुक्मिणीजीथी प्रकट्या हता. नटपुरना गोस्वामी श्रीव्रजरत्नलालजीने संतान न होवाथी तेमने सातमे वर्षे गोद लीधा. नानपणमां विद्याभ्यासनी साथे मल्लकुस्तीरूपी व्यायाम पोते आनंदथी करता, अने अश्वने पण पोते सारी रीते केळवी शकता, ने अश्वस्वारीमां पण चतुर हता, विद्याभ्यासमां पंडित मथुराप्रसाद शास्त्री, पंडित शिवशंकरजी, शास्त्री हरिशंकरजी, मोहनलाल शास्त्री, दुर्लभजी शास्त्री विगेरेनी पासे अभ्यास कर्यो हतो, अेटलुंज नहि, पण पुष्टिसंप्रदायना अद्वितीय विद्वान् भृगुकच्छवासी शास्त्री मन्नलाल गणपतिराम एम. ए. नी. पासे अणुभाष्यनुं सारुं अध्ययन कर्युं हतुं, अने मंगलाचरणमां 'तम् मन्नलालं मनसा स्मरामि' एम जणावी तेनु स्मरण कर्युं छे. संस्कृत साहित्य वांचवानो एमने घणो शोख हतो, अने रोज चार पांच कलाक वांचे नहि तो एमने चेन पडतुं नहि. शुद्धाद्वैतमंजरी, प्रमेयरत्नार्णव, पुष्टिमार्ग लक्षणानि ग्रंथनी टीका, वगेरे नाना मोटा आशरे चालीस ग्रंथ एमणे लख्या हशे एम धारवामां आवे छे. तेमां गोपालतापिनी उपनिषद् अने नारायणउपनिषद्‌न भाष्योनो पण समावेश थाय छे. सोळ वर्षनी उमरे पोते प्रथम वैष्णव परिषद्‌मां संस्कृतमां भाषण कर्युं त्यारे शास्त्रीजी बद्रीनाथ अने प्रोफेसर मन्नलाल शास्त्री वगेरे विद्वानो तेमज त्यां हाजर रहेला सर्वे मनुष्योने अत्यानंद थयो. पोते मुंबाइ रहेता ते समये गोस्वामी श्रीगोकुलनाथजी, श्रीदेवकीनंदनाचार्यजी, पंडित बलभद्र शर्मा, पंडित सुदर्शनाचार्यजी वगेरे घणा विद्वानोना प्रसंगमां आव्या. पछी पटना, कलकत्ता, मुंबाइ, वगेरे घणा स्थलोए व्याख्यानो आप्या अने शुद्धाद्वैतकेसरी, शुद्धाद्वैतवाचस्पति, शुद्धाद्वैतसहस्रांशु, वेदांतसुधाकर, वेदांतविद्यालकार पंडितमंडलेश्वर, पंडितेन्द्र, सर्वतंत्रस्वतंत्र वगेरे पदवीओ अने सुवर्णपदक वगेरे प्राप्त कर्या. सूरतमां छप्पनभोग समये तिलकाइत श्रीगोवर्धनलालजीए एमनी सराहना करतां कह्युं हतुं के 'तमे विद्यातिलकाइत छो'. संवत् १९६४ ना मार्गशीर्ष शुक्ल दशमीने दिने एमना लग्न मद्रासना श्रीमहालक्ष्मीवहुजी साथे थया. ते समये नटपुरना भाउसाहेब देसाइना पौत्र श्रीयुत गिरिधरदास मंगळदास वा तातासाहेबे सर्व व्यवस्था बहु सारी रीते करी हती, अने लग्नसमारंभ उत्साहपूर्वक उजव्यो हतो. संवत् १९६५ मां श्रीपुष्टिमार्गीयपुस्तकालयनी स्थापना पोते नटपुरमां करी, अने ते समये मायावादीओनी साथेना झगडामां शंकराचार्यमाधवतीर्थने चेलेंज करवानी पहेल पोते करी हती. त्यारपछी पोते जामनगरमां गादीनशीन थया,

शास्त्री हाथीभाइ आव्या, अने श्रीकृष्णचंद्राभ्युदय नाटक भेटमां आप्युं. महाराजश्रीए तरत ज आ पुस्तकना उत्तर रूपे गोपालतापिनीभाष्य रची स्वसिद्धान्त प्रतिपादन कर्यो, अने ते छपावी तेनी एक प्रति शास्त्रीजीने मोकली आपी. त्यार बाद आ नारायणोपनिषद् भाष्य रच्युं जे हाल प्रकट थाय छे. एमना प्रथमवहुजी जे सेवारसिक अने साहित्यरसिक हता, तेना लीलाप्रवेश थया पछी, संवत् १९८८ ना कार्तिक शुक्ल पूर्णिमाने दिने श्रीमहालक्ष्मीवहुजी साथे बीजुं लग्न कर्युं. ते समये नटपुरना वैष्णवोए तेमने पंडितेन्द्रनुं उपपद आपी सुवर्णपदक भेट कर्यो. गुरुवायुरमां हरिजनोना मंदिरप्रवेश संबंधी सत्याग्रह चालतो हतो ते समये सनातनधर्मना रक्षणने माटे पोताना शास्त्री हरिशंकरजीने त्यां मोकल्या हता, अने नटपुरमां वर्णाश्रम स्वराज्य–संघनी एक शाखा स्थापी हती. खेडाजिल्लामां वर्णाश्रम स्वराज्य संघना अधिवेशनमां एमने अध्यक्षस्थाने आपवामां आव्युं हतुं. मुंबाइमां गोस्वामी श्रीगोकुलनाथजीना अध्यक्षपणा नीचे प्रान्तीय सम्मेलन भरवामां आव्युं ते समये श्रीअनिरूद्धलालजीए स्वागतनुं अने उपसंहारनुं संस्कृत भाषामां व्याख्यान आप्युं हतुं, ते समये गोस्वामी श्रीवल्लभलालजी, श्रीरणछोडलालजी, शंकराचार्य श्रीभारतीकृष्णतीर्थजी, श्रीजयेन्द्रपुरीजी, रामानुजमतानुयायी श्रीदेवनायकाचार्यजी सर्वे विराजेला हता. श्रीशंकराचार्यजीए ते समये महाराजश्रीना कंठमां पुष्पमाला धरावी सर्वतन्त्रस्वतन्त्रना उपपदथी विभूषित कर्या. संवत् १९९१ मां श्रीपुष्टिमार्गीय पुस्तकालयनो रजत-महोत्सव उजवायो ते समये सात दिवस सुधी सभानुं प्रमुख स्थान अलंकृत करी नटपुरना तेमज बहारगामथी आवेला वैष्णवोने उपदेशनो लाभ आप्यो हतो. संवत् १९९२ ना मार्गशीर्ष कृष्ण सप्तमीने दिने पोते लीलाप्रवेश कर्यो.

श्रीवल्लभप्राकट्योत्सव सं. १९९९ चैत्र वदि ११.

**शेठ नारायणदास तथा जेठानंद आसनमल** ट्रस्ट फंडना ट्रस्टीओना सर्व वैष्णवोने भगवत् स्मरण.

श्रीहरिः ।

# ॥ अथ श्रीमदाथर्वणनारायणोपनिषत् ॥

ॐ भद्रङ्कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐअथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति ।
नारायणात्प्राणो जायते । मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते । नारायणादिन्द्रो जायते । नारायणात्प्रजापतिः प्रजायते । नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दाꣳसीति । नारायणात्प्रजायन्ते । नारायणात्प्रवर्तन्ते । नारायणे प्रलीयन्ते । एतदृग्वेदशिरोऽधीते ।

अथ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च नारायणः । रुद्रश्च नारायणः । प्रजापतिश्च नारायणः । शक्रश्च नारायणः । कालश्च नारायणः । आदित्यश्च नारायणः । दिशश्च नारायणः । ऊर्ध्वश्च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेदꣳसर्वं यद्भूतं यच्च भाव्यम् ।

अथ निष्कलो निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणोऽस्ति न द्वितीयोऽस्ति कश्चन । य एवं वेद । विष्णुरेव स भवति, स विष्णुरेव भवति । एतद्यजुर्वेदशिरोऽधीते ।

ॐ इत्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ॐ इत्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि । एतद्वै नारायणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनपब्रुवः सर्वमायुरेति । विन्दते प्राजापत्यं रायस्पोषं गौपत्यम् । ततोपासनयाऽमृतत्वमश्नुते, ततोऽमृतत्वमश्नुत इति । एतत्सामवेदशिरोऽधीते ।

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपं पश्यति । अकार उकारो मकार इति ।

अथ ॐ नमो नारायणायेति जपन्नुपासको वैकुण्ठभुवनं गच्छति। तदिदं पुण्डरीकं विज्ञानघनम्। तस्मात्तडिदाभमात्रम्। ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः। ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरुच्यते इति। सर्वभूतस्थमेकं वै नारायणम्, कारणं, पुरुषं, अकारणं, परं ब्रह्म इति। य एवं वेद नारायणसायुज्यमवाप्नोति। श्रीनारायणसायुज्यमवाप्नोति। एतदथर्वशिरोऽधीते।

प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायमधीयानो दिवसकृतं पापं नाशयति। सायम्प्रातरधीयानो पापोऽपापो भवति। मध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात् प्रमुच्यते। सर्ववेदपारायणपुण्यं लभते। इत्युपनिषत्॥





જન્મઃ-સંવત્ ૧૯૨૦ શ્રાવણ સુદી ૭.
અવસાનઃ-સંવત્ ૧૯૮૪ શ્રાવણ વદી ૭,
ઇ. સ. ૧૯૨૮ તા. ૬ ઠી સપ્ટેમ્બર.



જન્મઃ-સંવત્ ૧૯૨૮ ના ફાલ્ગુન વદી ૧૧.
અવસાનઃ-સંવત્ ૧૯૮૫ પોષ વદી ૧૨,
ઇ. સ. ૧૯૨૯ તા. ૬ ઠી ફેબ્રુઆરી.

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

विद्वत्केसरिगोस्वामिश्रीमदनिरुद्धाचार्यविरचितवेदान्त-

विद्यालङ्कारभाष्योपबृंहिता

# श्रीमदाथर्वणनारायणोपनिषद्

## ओङ्कारात्मजहरिशङ्करशास्त्रिविरचितया किरणावल्या समेता ।

---

जयत्यमलरासकृन्मदनदर्पसंहारकृ-

---

क्षणेन ब्रह्माद्यान्गगनपवनापः क्षितिविभे

प्रजाः प्राणांश्चेतः सृजति, सकलं यो भवति च ।

विरुद्धान्धर्मान्वै धरति रमणार्थं विभुरपि

नमामि श्रीनारायणमविकृतं भक्तशरणम् ॥ १ ॥

मायावादतमोनिरासनपटुः श्रीलक्ष्मणस्यात्मजो

जित्वा राजसभास्थितान्बुधवरो वादेषु सद्भावतः ।

शुद्धाद्वैतविभाकरं सुखकरं प्रादर्शयन्निर्भयो

वेदोद्धारधुरन्धरो विजयते श्रीवल्लभार्यः प्रभुः ॥ २ ॥

पितामहं वामनं च ठाकोरं तत्सहोदरम् ।

ओङ्कारं पितरं चैव रूपादेवीं च मातरम् ॥ ३ ॥

कनुमाधवलीलाख्यान्मणिं नत्वा पितामहीम् ।

हरिशङ्करशर्माऽहं तनोमि किरणावलीम् ॥ ४ ॥

अथ श्रीमच्छुद्धाद्वैतब्रह्मवादप्रवर्तकाचार्यवर्यजगद्गुरुश्रीश्रीवल्लभाचार्यमहाप्रभुपूज्यपादवंशावतंसाः शुद्धाद्वैतसहस्रांश्वाद्यनेकबिरुदालङ्कृता वेदान्तविद्यालङ्काराः श्रीमदनिरुद्धाचार्याः प्रारीप्सितस्य श्रीमदाथर्वणनारायणोपनिषद्भाष्यस्य वेदान्तविद्यालङ्काराख्यस्य निष्प्रत्यूहपरिपूर्तिप्रचारादिफलकं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं शिष्यशिक्षायै मङ्गलमाचरन्ति—जयतीति । अमलेति विशेषणं निरवद्यत्वबोधनाय; "रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः । योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः" इत्यत्र भगवतः श्रीकृष्णस्य योगेश्वरत्वोक्तेः । रसानां समूहो रासः । अथवा. रसस्याविर्भावो यस्मात । अत एवाह श्रुतिरपि

न्महेन्द्रमदभङ्गकृद्व्रजविलासिनीशोकहृत् ।

---

"रसो वै सः" इति । "उद्गतोऽग्निः सर्वत्रैवाग्निं लीनं जनयितुं शक्नोति" इति श्रीसुबोधिनीवाक्येन स्वयं रसात्मा पुरुषोत्तमः स्वस्मादेव रसमुत्पाद्य सर्वेषु स्थापयति, स्वयं च तत्र लीनो भवति; पुनः सर्वान्स्वस्मिन् लयं जनयति । इयं हि तस्य लीला । बहुनर्तकीयुक्तो नृत्यविशेषो रासः । अत्र हि रसोद्गमः क्रीडायां मनसो, नृत्ये च देहस्य । तेन क्रीडायाः सर्वथैव रसोद्गमे तद्बोक्तृत्वं च स्वप्रधानम्; न तु नायिकाप्रधानम् । अतएव **मदनेति**, मदनस्य कामस्यापि दर्पस्य संहारकर्ता । कामस्तु शिवब्रह्मादीनपि विमोहयति । तथाहि– "एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम् । दृष्ट्वा तस्यां मनश्चक्रे विषज्जन्त्यां भवः किल" इत्युपक्रम्य "प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः । तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः । शुष्मिणो यूथपस्येव वासितामनुधावतः" इत्याद्यष्टमस्कन्धे शिवस्य, सरस्वतीप्रसङ्गे विरञ्चेश्च मोहोत्पादनं प्रसिद्धमेव । इह पुनः "रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रमः" इत्युक्तेर्वशीकृतकामः, "सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग । वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः" इत्युक्तेश्च स्वरतिः श्रीकृष्णो मदनदर्पं संहरत्येव बाह्यरतित्वाभावात् । अत एवाहुः श्रीमदाचार्यचरणाः "रसात्मकस्तु यः कामः सोऽत्यन्तं गूढ एव हि ।" इत्यारभ्य "कामाख्यं सुखमुत्कृष्टं कृष्णो भुङ्क्ते न चापरः" इति । लौकिकरत्यादिषु रसाभास एवेति विचक्षणैर्बहुशः प्रतिपादितम् । रसात्मकस्तु कामः भगवत्सम्बन्धेनैव भवति । अत एव "क्रिया सर्वाऽपि सैवात्र परं कामो न विद्यते" इति श्रीमदाचार्यचरणोक्तेः कामाभाव एव तत्र, तेन विद्यमानायामप्युद्बोधकसामग्र्यां कामोद्रेकाभावः । तदेवाहुः "कामाभावेन पूर्णस्तु निष्कामः स्यान्न संशयः" इति । भगवतो निर्जितकामत्वादेव कामपराभूताः शिवादयस्तद्दर्शनार्थं जग्मुः । तथाहि "····नभस्तावद्विमानशतसङ्कुलम् । दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम्" इति । उक्तं च श्रीधरस्वामिनापि "ब्रह्मादिजयसंरूढदर्पकन्दर्पदर्पहा । जयति श्रीपतिर्गोपीरासमण्डलमण्डनः" इति । एवमेव "स्मयावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः । पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं कुहकैर्न विभ्व्यः" इत्यत्र स्पष्टमेव कामपराजयः प्रदर्शितः । **महेन्द्रेति** । महेन्द्रस्य पुरन्दरस्य गोवर्धनोद्धरणादिना मदभङ्गं करोतीति तथा । "कालात्मना भगवता शक्रदर्पं जिघांसता । प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्ति तद्वचः" इति वाक्याद्भगवत्प्रेरणया कृते च गोवर्धनयागे, शक्रेण चोपलादिवर्षणेन कृतेऽपि गोकुलपीडने, भगवता तद्रक्षायाः कृतत्वात् । तथाहि–"देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वाऽनुकम्प्युत्स्मयन् । उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा बिभ्र-

**प्रपन्नपरिपोषकृन्निजजनैकहृद्वासकृ-**
**त्प्रपञ्चविभवान्तकृत्प्रमथनाथसन्तापहृत् ॥ १ ॥**

---

विविक्त उपसङ्गम्य व्रीडितः कृतहेलनः । पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा । दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः । नष्टत्रिलोकेशमद इन्द्र आह कृताञ्जलिः" इत्युपक्रम्य पुरन्दरकृतस्तुतौ तेनैव "मयेदं भगवन्गोष्ठनाशायासारवायुभिः । चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना । त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः । ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः" इत्युक्तत्वात् । भगवतापि "मया तेऽकारि मघवन्मखभङ्गोऽनुगृह्णता । मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् । मामैश्वर्यश्रीमदान्धो दण्डपाणिं न पश्यति । तं भ्रंशयामि सम्पद्भ्यो यस्य चेच्छाम्यनुग्रहम्" इत्युक्तत्वात् । **व्रजविलासिनी**ति । "इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा । रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः" इत्येवंरूपस्य तासां शोकस्य "तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः" इत्यादिनाऽपहारक इत्यर्थः । **प्रपन्ने**ति । प्रपन्नानां "सन्त्यज्य सर्वविषयांस्तव पादमूलम्" इत्युक्तेः "तव पादरजःप्रपन्नाः" इति चोक्त्या लोकवेदत्यागपूर्वकं शरणागतानां भयेभ्यः संसारासक्तिरूपेभ्यः परिपोषकृद्रक्षक इत्यर्थः । "सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम" इत्युक्त्या तस्य तद्व्रतत्वात् । अत एव **निजजनैकहृद्वासकृ**दिति । निजजनानां भक्तानां हृदि वासं करोतीति तथा । "नाहं वसामि वैकुण्ठे योगिनां हृदये न च । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद" इति वाक्यात्कीर्तनादिना भक्तान्तःकरणस्थितस्याविर्भावकथनात्, "दुर्लभानपि सिद्धानां मुकुन्दं हृदि पश्यतः", "आहुश्च ते नलिननाभ पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः । संसारकूपपतितोत्तरणावलम्बं गेहंजुषामपि मनस्युदियात्सदा नः" इत्यादिवाक्येभ्यः, "दहर उत्तरेभ्यः" इत्यत्र च दहरं भक्तानां हृत्कमलमिति श्रीमत्प्रभुचरणैर्विद्वन्मण्डने व्याख्यातत्वाच्च । **प्रपञ्चे**ति । प्रपञ्चस्य संसारस्य विभवोऽहन्ताममतात्मकस्तस्यान्तकृन्नाशक इत्यर्थः । अथवा, प्रपञ्चस्य विभव ऐश्वर्यरूपो जनकः कामः, तदन्तकृन्नाशकः । तथाचोक्तं "अत एतच्छ्रुतौ लोको निष्कामः सर्वथा भवेत्" इति, "भगवच्चरितं सर्वं यतो निष्काममीर्यते" इति, "अतः कामस्य नोद्बोधः" इति च । तथा च "सन्तुष्टः सर्वदुःखानि नाशयत्येव सर्वतः" इत्युक्तेः, संसारदुःखोदर्कनाशकत्वमेव प्रदर्शितम् । **प्रमथे**ति । प्रमथनाथः शिवः, तस्य सन्तापं हरतीति । "सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः । कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः" इत्युक्तेस्तस्याप्यनिश्चिततत्त्वत्वात्समुत्पन्नस्य सन्तापस्य वेणुनादश्रावणेन कश्मलं मूर्च्छां प्रापय्य स्वात्मानन्दे निमग्नं कृत्वा सन्तापहारक इति भावः । अथवा, वृकासुरं हत्वा शिवस्य सन्तापहारकः । अत एव पण्डितपुरन्दराः श्रीपुरुषो-

**सर्वस्वं सुकृतस्य रम्यसदनं शान्तेश्च भाग्यं दृशां**
**सौभाग्यं शरणागतस्य सुमनःश्रैष्ठ्यं च भक्तेः फलम्।**
**साकूतं कुसुमायुधस्य हृदयं श्रीराधिकायास्तुते–**
**स्तत्त्वं मन्मथमोहनं रसघनं नित्यं मुदा संश्रये ॥ २ ॥**
**वक्रोष्णीषे स्रगतिविमला शोभते मौक्तिकानां**
**कण्ठे मालां मणिविरचितां कर्णयोः कर्णपुष्पे ।**
**स्वच्छैर्हीरैः समनुजटितां मध्यमाणिक्यमुख्यां**
**नासाभूषां दधति वदने नौमि तं बालकृष्णम् ॥ ३ ॥**
**यो निर्माति च पाति संहरति वै सर्वं जगल्लीलया**
**निर्लेपो रमते रमापतिरसौ ध्येयः सदा योगिभिः ।**
**साकारः शुभसर्वशक्तिविलसन्नानन्दरूपो रसः**
**सङ्गीतः श्रुतिभिर्ममास्तु वचने मुक्तोपसृप्यो हरिः ॥ ४ ॥**

---

लीलाभेदे स्वरूपभेद इति न्यायेनैकस्यापि नानाविधस्वरूपान् नमन्ति, तेषु प्रथमतः स्वसेव्यं श्रीमदनमोहनं जामनगरे विराजन्तं प्रणमन्ति–**सर्वस्वमित्यनेन** ॥ २ ॥

नटपत्तने विराजन्तं श्रीबालकृष्णं नमन्ति–**वक्रोष्णीषेत्यादिना** ॥ ३ ॥

एतदुपनिषत्प्रतिपाद्यस्वरूपं स्तुवन्ति–**यो निर्माति चेति** । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्ति" इति श्रुतेः। एतदुपनिषद्यपि "नारायणात्प्रजायन्ते, नारायणात्प्रतीसन्ते, नारायणे प्रलीयन्ते" इत्युक्तत्वाच्च । **लीलयेति** । निरङ्कुशसर्वकर्तृत्वम् । अनेन "तदैक्षत बहु स्यां प्रजायेय" इत्यादिश्रुतिप्रतिपाद्यं "स वै नैव रेमे स द्वितीयमैच्छत्" इति श्रुते रमणार्थमेवैतत्सर्वमिति सूच्यते । एतदुपनिषद्यपि "पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेय" इत्युक्तमेव । **निर्लेपो**ऽविकृतत्वात् । **साकारः**। "पुरुषो ह वै नारायणः" इति श्रुतेः । **सर्वशक्तीति** । अलौकिकसर्वधर्मयुक्तः । **आनन्दरूपः** । "आनन्दमात्रकरपादमुखोदरादिः" इति वाक्यात् । **रसः**। "रसो वै सः" इति श्रुतेः । **मुक्तोपसृप्य** इति । "मुक्तोपसृप्यव्यपदेशात्" इति न्यायात्तादृशः शुद्धाद्वैतरूपो **वचने** वेदान्तविद्यालङ्कारभाष्येऽस्तु। एतेनास्य स्वकल्पितत्वं पराहतम्। मुक्तैर्जीवन्मुक्तैरुपसृप्यः। तथाचैतद्भाष्यस्याधिकारिसम्बन्धविषयप्रयोजनान्यपि प्रदर्शितानि । मुक्तोपसृप्यत्वकथनात्सात्विको भगवद्भक्तो मक्तावधिकारी भगवदिच्छया भवान्तसम्भवोऽधिक्रियते । सर्वकर्तृत्वोक्त्या

**स्वमोदमुदितोऽपि सन्निजजनैकशिक्षाकृते**
**मुकुन्दपदपङ्कजं परिचरन्प्रतापोज्ज्वलः ।**
**अनन्यजनमुक्तिदो विबुधमण्डलीपूजितो**
**निगूढवचनः सदा जयति वागधीशः प्रभुः ॥ ५ ॥**
**प्रचण्डपाखण्डमतानुयायिनो**
**जित्वा सभायां नृपतेः स वाक्पतिः ।**
**वेदान्तसिद्धं स्वमतं न्यरूपय-**
**च्छुद्धाद्वयं मद्धृदये विराजतात् ॥ ६ ॥**
**श्रीमद्वल्लभवंशवार्धिविकसज्जैवातृकः पुण्यभूः**
**शुद्धाद्वैतनिरूपणे भगवतो ज्ञानावतारोऽपरः ।**

---

एवं ग्रन्थाध्ययनविषयकप्रवृत्तिप्रयोजकीभूतज्ञानविषयत्वरूपमनुबन्धचतुष्टयं प्रदर्श्य श्रीमद्वल्लभाचार्यान्स्तुवन्ति—**स्वमोदे**ति। "स्वानन्दतुन्दिल" इति श्रीमत्प्रभुचरणोक्तत्वात्। **निजजने**ति । "जनशिक्षाकृते कृष्णभक्तिकृदि"ति सर्वोत्तमस्तोत्रोक्तरूपः। **मुकुन्दे**ति । पृथ्वीप्रदक्षिणायां सहैव विराजमानं स्वसेव्यं श्रीमुकुन्दरायस्वरूपमधुना काश्यां विराजमानं, तस्य पदपङ्कजं परिचरन्सेवन् । अत एवाहुः "मुकुन्दरतिवर्धिनीं नमत कृष्णतुर्यप्रियाम्" इति । श्रीमुकुन्दरायाणां यमुनातः प्रादुर्भावात्। **प्रतापोज्ज्वल** उग्रप्रतापः। अनन्यगणायाव्यभिचारिण्या भक्त्या प्रपन्नभक्तवृन्दाय मुक्तिं सायुज्यं ददाति स्वस्यादेयदानदक्षत्वादनन्यभक्तेषु ज्ञापिताशयत्वाच्च । **विबुधा** विद्वांसः, तन्मण्डलीपूजितः सत्कृतः । सर्ववादिनिरासकृतत्वात् । विबुधेश्वरत्वाच्च । **निगूढवचनो** निगूढहृदयः। **वागधीशो** वाक्पतिः। तथाहि—"न ह्यन्यो वागधीशाच्छ्रुतिगणवचसां भावमाज्ञातुमीष्टे यस्मात्साध्वी स्वभावं प्रकटयति वधूरग्रतः पत्युरेव । तस्माच्छ्रीवल्लभाख्य त्वदुदितवचनादन्यथा रूपयन्ति भ्रान्ता ये ते निसर्गत्रिदशरिपुतया केवलान्धन्तमोगाः" इति । श्रुतिरहस्येऽपि "नमो ब्रह्मणे नमो अस्त्वग्नये" इत्यत्र वाचस्पतिशब्दे तथैव निरूपणात् । **प्रभु**र्विभुत्वात्पतित्वात्प्राप्तश्रीमहाप्रभुबिरुदत्वाच्च ॥ ५ ॥

श्रीमहाप्रभुबिरुदप्राप्तिं वर्णयन्ति—**प्रचण्डे**ति । प्रचण्डपाखण्डमतानुयायिनः स्वबुद्ध्या वेदार्थं परिकल्प्य विचारशास्त्रस्योत्तरमीमांसायास्तदानुकूल्येन मतप्रचारकान् । **नृपतेः** श्रीकृष्णदेवराज्ञः । **सभायां** विजयनगरे विद्यानगरे वेति शेषः। **स्वमतं** शुद्धाद्वैतम्। **वेदान्तसिद्ध**मित्यनेन "ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः । तथैवार्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्" इति, "लक्षणां नैव वक्ष्यामि" इति "अक्षरमात्रान्यथा कथनेऽपि दोषः स्यात्" इत्यादि च श्रीमद्वल्लभाचार्याणां प्रतिज्ञां स्मारयन्ति ॥ ६ ॥

श्रीमद्बालककृष्णसेवनरतः श्रीविट्ठलेशात्मज-
स्तं तातं मुरलीधरं सुमनसा वन्देऽवदातं मुहुः ॥ ७ ॥
ललितां मातरं वन्दे कृपापीयूषवर्षिणीम् ।
यस्याः प्रबन्धतो विद्यां प्राप्नुयां पारमेश्वरीम् ॥ ८ ॥
श्रीमद्वल्लभवंशकौस्तुभमणिर्विद्यावतामग्रणी-
र्गोविन्दाङ्घ्रिसरोजसेवनधनो गोस्वामिचूडामणिः ।
यः श्रीभागवतामृतं निजजनेऽवर्षीदजस्रं हि तम्
पि(?)तृव्यं पुरुषोत्तमं निजगुरुं दीक्षाप्रदं नौम्यहम् ॥ ९ ॥
सद्विद्यासमलङ्कृतं बुधवरं श्रीवल्लभं संश्रितं
धीरं सौम्यतनुं पवित्रचरितं वेदान्तविद्यागुरुम् ।
शिष्याध्यापनकर्ममार्गनिपुणं तं मग्नलालं मुदा
औदीच्यान्वयजं सुधीगणपतेः सूनुं स्मराम्यन्वहम् ॥ १० ॥

ॐ भद्रङ्कर्णेभिः शृणुयाम देवाः,

तत्रादौ भगवतः "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति तैत्तिरीयश्रुत्या सच्चिदानन्दस्य परब्रह्मणः स्वरूपानन्दप्राप्तेरेव मोक्षपदाभिलप्यत्वेन, मोक्षश्च

---

सेव्यस्वरूपस्य सेवने निर्गुणभक्तिमार्गप्रोक्तप्रकारेण परिचर्यायां रतः प्राप्तव्यसनसम्पत्तिः । "ततः प्रेम तथाऽऽसक्तिर्व्यसनं च यदा भवेत्" इति "यदा स्याद्व्यसनं कृष्णे कृतार्थः स्यात्तदैव हि" इति च श्रीमदाचार्यचरणवाक्यात् ॥ ७ ॥

मातृचरणान्नमन्ति–**ललिता**मिति । यस्याः प्रबन्धतो नटपत्तनादिषु श्रीविष्णुराम-शास्त्रिप्रभृतिपण्डितप्रकाण्डान् नियुज्य, वेदान्तशास्त्राध्ययनाय मुंम्बापुरीं गन्तुमाज्ञां प्रदाय च ॥ ८ ॥

ब्रह्मसम्बन्धदीक्षाप्रदं पितृव्यं नमन्ति–**श्रीमद्वल्लभवंशकौस्तुभमणिरिति** ॥ ९ ॥

विद्यागुरून् भगवच्छास्त्रनिष्णातान्मग्नलालशास्त्रिमहाभागान्स्मरन्ति–**सद्विद्ये**ति। आङ्ग्ल-भाषायाः पूर्णवेत्तृत्वेऽपि वेदशास्त्राणां तलस्पर्शिज्ञानत्वाद्वेदानामपौरुषेयत्वस्वतःप्रामाण्यादिष्व-सन्दिग्धधीत्वाद् भूतार्थमेवैतद्विशेषणम् । औदीच्यान्वयजं टोळकिया–औदीच्यज्ञाति-सम्भवम् ॥ १० ॥

अथैतदुपनिषदुक्तशान्तिं पठन्ति—**तत्रादाविति**। **सत्यमिति** । स्वरूपलक्षणमिदम् । फलवाक्यस्य "ब्रह्मविदाप्नोति परम्" इत्यस्य व्याख्यानरूपेयमृक् । सत्यत्वादिना ब्रह्मपदार्थं

**"चतुर्मुखादीनां सर्वेषामपि विना विष्णुभक्त्या कल्पकोटिभिर्मोक्षो न विद्यते", "भक्त्याहमेकया ग्राह्यः", "भक्त्या मामभिजानाति" इत्याद्यनल्पाभिर्निगमगीतादिसूक्तिभिर्भक्त्येति शास्त्रीयसिद्धान्तात्, तस्याश्च परमकाष्ठापन्ने तस्मिन्माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपत्वेन तत्र तत्रोक्तत्वाच्च, तन्निरूपकोपनिषच्छ्रवणाध्ययनमननेषु तदुक्तभक्त्यनुष्ठाने चोद्वेगादीनां बाधकत्वेन निःशेषप्रत्यूहपराहतिपुरःसरं शान्तिप्राप्तिः परमेश्वरादेवेति निश्चित्य तदर्थं स्वाशास्यप्रकटन-**

---

वेदे च प्रथितः पुरुषोत्तमः" इति स्मृतेः "आनन्दमयोऽभ्यासात्" इति ब्रह्मसूत्राच्चावगतं सकललोकवेदातीतं निरङ्कुशसर्वकर्तृस्वतन्त्रं क्रीडन्तं पूर्णत्वरूपमेव; "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते, पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतेः। मोक्षश्चाहम्ममात्मकस्य संसारस्य निवृत्तिपूर्वकं नित्यलीलाप्रवेशः। तत्साधनं च भक्तिरेव। तत्र प्रमाणमाहुः—**चतुर्मुखादीनामिति भक्त्याहमिति** च। तत्स्वरूपमाहुः **परमेति**। "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा" इति श्रीनारदपञ्चरात्रवाक्यात् महान् आत्मा बृहत्त्वाद्बृंहणाच्च, तस्य भावो माहात्म्यम्, तज्ज्ञानं माहात्म्यज्ञानम् "ऐतदात्म्यमिदं सर्वम्" इति श्रुतेः। एतादृशभक्त्यनुष्ठाने बाधकमाहुः—**उद्वेगेति**। "उद्वेगः प्रतिबन्धो वा भोगो वा स्यात्तु बाधकम्" इति श्रीमदाचार्यचरणवाक्यात्। उद्वेगादीनां लक्षणादीनि सेवाफलोक्तान्येवात्र सङ्ग्राह्याणि। तद्यथा—"सेवायां क्रियमाणायामन्यत्र गमनेच्छादिरुद्वेगः" इति श्रीकल्याणरायाः, "श्रवणे, कीर्तने, भगवद्दर्शने, सेवायां च ज्वरादिजनितापाटवेन स्वतोऽप्रवर्तमानानामिन्द्रियाणां प्रसह्य प्रवर्तनाद्विक्षेपः" इति श्रीगोपेशाः। उद्वेगो नाम मनसः सेवायां क्रियमाणायामुत्कृष्टो वेगः। सर्वथा तत्रास्थिरता बाहिर्मुख्यमिति यावत्। स च सेवाया अनाधिदैविकीत्वसम्पादकतया प्रतिबन्धकः। तस्मिन् सति क्रियमाणसेवायाः केवलकायिकीत्वान्मानसीत्वाभावेन प्रतिबन्धनेनाधिदैविकीत्वात्" इति श्रीहरिरायाः। "मनसोऽन्यपरता उद्वेगः" इति श्रीवल्लभाः। "उद्वेगो नाम उच्चैर्भयं चलनं वा। ओविजी भयचलनयोः। तदत्र सेवायां क्रियमाणायां दुष्टादिभ्यो भयं वा पापादिना बुद्धेश्चाञ्चल्यं वा। अत्र द्वितीयमदृष्टजन्यम्। एतदुभयमप्यान्तरमतो द्विविधोऽप्युद्वेगो बाह्यसेवाफलरूपा मानसी तत्समानाधिकरणविरुद्धसामग्रीरूपस्तत्प्रतिबन्धकः" इति श्रीपुरुषोत्तमाः। "उदधिको वेगो भयम्, अपराधादिना मनश्चाञ्चल्यं वा पापादिना। स च सेवाऽरुचिसम्पादनेन बाधकः" इति श्रीविवृतिविवरणकाराः। "उद्वेगो भगवत्सेवासमये चित्तक्लेशप्रदश्चाञ्चल्यविशेषः। स च सेवायां प्रतिबध्नाति" इति लालूभट्टाः। "उद्वेगः शोकदुःखादिजनितो भवति" इति जयगोपालभट्टाः। एवमेव मनसोऽस्थैर्यादिकमप्युक्तं व्याख्याकृद्भिः। प्रति-

**पूर्वकं कर्तुमकर्तुमन्यथाकर्तुं च समर्थं स्वभक्तरक्षणे दक्षं "वेदैश्च सर्वैरहमेव वेद्यः" इति गीतोपनिषदुक्तं सकलवेदवेद्यं श्रीकृष्णं सात्त्वताः प्रार्थयन्ते–ओमिति ।**

---

न्तरासक्तिः" "कायस्यान्यपरता" इत्यादिलक्षणलक्षितः । भोगोऽपि "रूपरसगन्धशब्दस्पर्शानां लौकिकविषयाणामत्यासक्त्या सेवनम्" इत्यादिप्रकारकः । एतत्रितयमपि भक्त्यनुष्ठाने बाधकम् ।

**ओमितीति** । ओङ्कारो मङ्गलार्थकः । "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिष्क्रान्तौ तस्मान्माङ्गलिकावुभौ" इति वाक्यात् । ओङ्कारपूर्वकमेव वेदोच्चारणं कर्तव्यमिति नियमाद्वा । "प्रणवः सर्ववेदेषु" इति गीतास्मृतेर्भगवद्रूपत्वात् । "तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्" इति च वाक्यात्, "स्वाध्यायो ब्रह्मयज्ञः" इति स्मृतेः प्रणवपूर्वकमेव स्वाध्यायाध्ययनम् । "परस्य ब्रह्मणो ह्येतानि नामानि, ओतं प्रोतं जगद्यत्र स्वयं च पूर्णो वेदोक्तस्वरूपोऽनुपचारतश्च, सर्वैः शुभैश्चाभियुतो न चान्यैः" "ॐतत्सदित्येतमतो वदन्ति", इति हि ऋग्वेदखिलेषूक्तत्वात् । "ओमिति ब्रह्मेति च" इति श्रुतेश्च । "आरम्भेऽत्र भगवानोमित्यादौ वदत्यजः । ओमिति ब्रह्मणो नाम प्रसिद्धं यत आगमे ॥ तस्मादोमित्युदाहृत्य विधिशास्त्रेण बोधिताः । प्रकृष्टत्वेन वर्तन्ते यज्ञदानतपःक्रियाः ॥ अङ्गवैगुण्यराहित्यात्सततं वेदवादिनाम् । यस्यैकावयवोच्चार्यमाणे वैगुण्यसङ्क्षयः ॥ किम्पुनस्तस्य सर्वस्तस्योच्चारणादिति संस्तुतिः ॥ अहो हरेर्नाम महत्फलं श्रुतौ श्रुतं सदोङ्कार इति स्मृतं हृदि । पुनाति यज्ञादिकृतं लुनाति पापौघमुदीरणात्सकृत् ॥" इति च वाक्येभ्यस्तस्य सर्वविघ्नोपशामकत्वाच्च । "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृर्णान्येवमोङ्कारेण सर्वा वाक्" इति श्रुतेः सर्वो वेद ओङ्कारेण ग्रथितः । अस्य हिरण्यगर्भादिरूपत्वं त्वग्र एतदुपनिषदारम्भे निराकरिष्यत इति ततोऽवगन्तव्यम् ।

एतन्निर्वचनविषये पाश्चात्या बहुशो विप्रतिपद्यन्ते, मेक्समूलरः "अव" इति सार्वनामिकान्मूलरूपात् 'अवम्' इति जाते सम्प्रसारणे च कृते 'अउम्' इति जाते गुणे च कृते "ओम्" इत्याह ।

बोथलिङ्गमहाशयो राथश्चात्रानुगमकाभावान्नाङ्गीकुरुतः, प्रतिपादयतश्च 'ओ' इति ध्वनेः सानुनासिकमिदं रूपमिति । तत्र मानम् "ॐश्रावय" इत्यत्र सूत्रकारा "ओ श्रावय" इति प्रयोजयन्ति इति । एवमेव "आश्रावय" इति च सूत्रेषु प्रयोगो दृश्यते । तेन "अ" इति ध्वनेरपि स्यादिदं रूपम् । तथा ओमिति स्वतन्त्रोऽपि ध्वनिः प्रणवापरपर्यायः । पुरोनुवाक्याश्रुतीनामुच्चारणेऽन्तिमः सानुनासिकः 'ओ' स्वरः प्रयुज्यते वैदिकैः । ओमाङोश्च (६–१–९५)

समस्तविघ्नेभ्यः स्वरूपानन्दप्राप्तिपर्यन्तं भक्तानवतीत्योम् । "भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान्प्रयच्छति मोक्षं दापयति", "मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि", "इत्थं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत्" इत्यादिश्रुतिगीतासात्त्वतसंहितासूक्तिसमुदितं सात्त्वताभयदमोङ्कारपदवाच्यं परं ब्रह्म कृष्ण एवेति निगर्वः ।

( विघ्नविभागः )

तत्र, विघ्नो द्विधा, ऐहिकः, आमुष्मिकश्च । स एव पुनर्विषयबाहुल्यप्रयुक्तोऽनेकविधत्वं भजते । तत्र, ऐहिकः, पशुपुत्रप्रमदागारधनादिप्रापञ्चिकेषु तत्तदिन्द्रियविषयेष्वासक्तिरूपः । ततोऽवनं नाम प्रापञ्चिकसकलविषयानभिमुखीकरणपूर्वकसर्वेन्द्रियान्तःकरणात्मनां स्वैकसाम्मुख्यसम्पादनम् । प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिरूपस्य निरोधस्य श्रीमदाचार्यचरणैराज्ञप्तत्वात् ।

आमुष्मिकस्तु, व्यापिवैकुण्ठेतरब्रह्मलोकपर्यन्तं पुनरावृत्तिपर्यवसितविविधलोकापातरम्यसुखाशासम्भवः । "आब्रह्मभुवना लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति गीतासुगीतत्वात् । पुनरावृत्तिपर्यवसितत्वं तु तेषां नैर्गुण्याभावप्रयुक्तमेव । "मन्निकेतं तु निर्गुणम्" इति सात्वतसंहितासूक्त्या नैर्गुण्यस्य व्यापिवैकुण्ठ एव नियतत्वात् । ततोऽप्यधिकां तु पूर्ववदेव । तदन्तःप्रविष्टा एव सुरासुरकृता विघ्नाः । तत्र सुरकृता यथा— "त्वां सेवतां सुरकृता बहवोऽन्तरायाः" इत्यादिव्यासवाक्यविषयाः । असुरकृताः प्रह्लादादिषु प्रसिद्धाः । तेभ्यः सर्वेभ्योऽपि विघ्नेभ्यो भक्तानामवनमोङ्कारपदवाच्येन परब्रह्मणैव क्रियते । तस्य भक्तवत्सलस्वभावत्वात् ।

---

श्चाथशब्दश्चे"ति प्रमाणत्वेन प्रदर्श्यते, तर्हि तत्र सर्ववर्णप्रकृतिरूपतयैवोक्तत्वात्, मङ्गलरूपत्वाच्च नैतेषां मतानि समर्थितानि भवन्तीत्यलम् । उपनिषत्सु "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रब्रवीम्योमित्येतत्" इत्यादयः श्रुतयः परब्रह्मत्वेन वर्णयन्त्योङ्कारमिति ।

**समस्तेति** । भगवत्सेवाप्रतिबन्धका उद्वेगादयो वाऽऽधिभौतिकादीनि दुःखानि वा । **स्वरूपेति** । "रसो वै सः" इतिश्रुते रसात्मकपुरुषोत्तमप्राप्तिपर्यन्तं भक्तिमार्गीयफलानुभवपर्यन्तमिति यावत । तत्र प्रमाणान्याहुः—**भक्तवत्सलेत्यारभ्याविरासीदित्यन्तम्** ।

( श्रुत्यर्थः )

एवं परमकाष्ठापन्नं सम्बोध्य स्वाशास्यं निवेदयन्ति–भद्रमिति। परमफललोपलब्धावधिकारसम्पादकत्वेन महामङ्गलस्वरूपं वेदवेदान्तमीमांसापुराणेतिहासादिकं सकलं भगवदीयं शास्त्रम्।

अत्र, शङ्कराचार्या नृसिंहपूर्वतापिनीभाष्ये "भद्रं कल्याणम्" इत्याहुः। नानकीया अमरदासास्तु मणिप्रभाव्याख्यायां प्रश्नोपनिषट्टीकायामेतन्मन्त्रव्याख्याने "भद्रं भजनीयं कल्याणवचनं निर्विशेषब्रह्मप्रतिपादकवेदान्तजातम्" इति वदन्ति। तन्न मञ्जुलम्, वेदपुराणेतिहासादिषु "वेदे रामायणे चैव पुराणे भारते तथा। आदौ मध्येऽवसाने च हरिः सर्वत्र गीयते" इत्यादिवाक्याद्भद्रत्वस्य सर्वत्राव्यवहितत्वात्। तेषां प्रामाण्यस्यापि "इतिहासः पुराणश्च वेदानां पञ्चमो वेदः" इतिश्रुतिविश्रुतत्वाच्च।

नन्विदमसङ्गतम्—शाङ्करभाष्यविरोधात्। तथाहि–"एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निःश्वसितानि" इति बृहदारण्यकीयश्रुतिवाक्ये शङ्कराचार्यैः "किं तन्निःश्वसितमिव जातमित्युच्यते, यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसश्चतुर्विधं मन्त्रजातम्, इतिहास इत्युर्वशी पुरूरवसोः सम्वादादि "उर्वशी हाप्सराः" इत्यादिब्राह्मणमेव। पुराणं "असद्वा इदमग्र आसीत्" इत्यादि। विद्या, देवजनविद्या। वेदः "सोऽयम्" इत्याद्यः। उपनिषदः "प्रियमेतदुपासीत" इत्याद्याः। श्लोकाः, ब्राह्मणप्रभवा मन्त्राः "तदेते श्लोकाः" इत्यादयः। सूत्राणि

---

उपनिषत्सु शान्तिपाठस्तत्प्रतिपाद्यस्य भगवत्स्वरूपस्य श्रवणाधिकारसम्पादकः। तदेतन्मतान्तरनिरासपूर्वकमाहुः–**वेदे**त्यादिना। पुराणेतिहासादीनां वेदमध्यपातित्वमाशङ्क्य परिहरन्ति–**नन्वि**त्यारभ्या**सगतेश्चे**त्यन्तम्। पुराणं च पञ्चलक्षणमतःशास्त्रे विशेषः। तथाचोक्तम् "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्" इति। इतिहासलक्षणं च धर्मार्थकाममोक्षाणामुपदेशसमन्वितत्वे सति पुरावृत्तकथायुक्तत्वमिति। एवं च पुराणेतिहासादेर्न वेदान्तर्गतत्वमिति निर्गलितार्थः। तथा च मनुः–"स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च" इति।

वस्तुसङ्ग्रहवाक्यानि वेदे, यथा "आत्मेत्येवोपासीत" इत्यादीनि । अनुव्याख्यानानि चतुर्थाध्याये "आत्मेत्येवोपासीत" इत्यस्य, यथा वा "अन्योऽसावन्योऽहमस्मीति न स वेद पशुरेव" इत्यस्यायमेवाध्यायशेषः । मन्त्रविवरणानि व्याख्यानानि । एवमष्टविधं ब्राह्मणम्" इत्याभाष्य प्रसिद्धेतिहासपुराणयोरनादृतत्वादिति चेत्, तन्मन्दम्; "इतिहासपुराणं वेदानां पञ्चमं वेदम्" "ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणश्चतुर्थ इतिहासपुराणं पञ्चमो वेदानां वेदः" "वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदं सामवेदमथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्" इति छान्दोग्यसप्तमाध्याये नारदसनत्कुमारसम्वादीयप्रथमद्वितीयखण्डोक्तश्रुतित्रयविरोधात्, प्रसिद्धयोस्तयोस्तथात्वानङ्गीकारे ब्राह्मणोक्तयोस्तयोस्तन्मध्यपतितत्वे पञ्चमत्वोक्त्यसङ्गतेश्च । किञ्च; तयोस्तद्रूपत्वाभावे तदुपबृंहकत्वासिद्धिः । न चेष्टापत्तिः, "इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्, बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति" इति ब्रह्माण्डीयप्रथमाध्यायवाक्यस्य, "वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः" इति विष्णुपुराणवाक्यस्य, "नान्यथा ज्ञायते धर्मो ब्रह्मविद्या च वैदिकी, तस्मात्सर्वं पुराणञ्च श्रद्धातव्यं मनीषिभिः" इति कौर्म्यपञ्चदशाध्यायवाक्यस्य च विरोधापत्तेः ।

न चात्रार्थवाद इति शङ्क्यम्; पुराणेष्वर्थत्वं ये वदन्ति नराधमाः,

---

तत्स्पष्टतया विवृण्वन्ति—**तथाहीति** । तदेव खण्डयन्ति—**तन्मन्दमिति** । मन्दं शास्त्रविद्भिरमान्यमित्यर्थः । तत्र श्रुतिप्रमाणमाहुः—**इतिहासेति** । ननु पूर्वमीमांसायां श्रुतिमूलकतया तत्प्रामाण्यस्य स्वीकृतत्वाच्छ्रुतिमध्यपातित्वे का हानिरिति चेत्, न; तन्मध्यपातित्वे पञ्चमत्वभङ्गापत्तेः । अत एवाहुः—**पञ्चमत्वोक्त्यसङ्गतेश्चेति** । पुराणानि वेदोपबृंहकाणीत्याहुः—**किञ्चेत्यादिना विरोधापत्तेरित्यन्तेन** ।

पुराणानामर्थवादत्वमाशङ्क्य निराकुर्वन्ति **न चेति** । **पुराणेष्विति** । तथा च पुराणेषूक्तानां व्रततीर्थदानयज्ञादीनामाचारादीनां चानर्थक्यप्रसङ्गो दुर्वारः । किञ्च, "स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा" इत्यादिना स्त्रीशूद्रोपकाराय व्यासप्रवृत्तिः । पुराणानामर्थवादत्वे, तस्य च "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" इति पूर्वतन्त्रन्यायेन विध्येकवाक्यतया प्रामाण्यात्, विधीनां च त्रैवर्णिकवेद्यत्वाद्व्यासप्रवृत्त्यानर्थक्यप्रसङ्गोऽपि

तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि” इति बृहन्नारदीये दोष-कथनात् ।

यत्तु, नित्यानन्दमुनयो मिताक्षरायाम् “ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः” इति चतुर्विधमन्त्रजातमुच्यते; अथर्वणाङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः; इतिहास उर्वशीपुरुरवसोः सम्वादादिरूपो ब्राह्मणभागः “उर्वशीहाप्सराः” इत्यादि ब्राह्मणमेव; पुराणं “असद्वा इदमग्र आसीत्” इत्यादि, विद्या, देवजनविद्या “उदकुम्भं निधाय दास्यो मार्जालीयं परिनृत्यन्ति” इत्यादि ब्राह्मणमेव; उपनिषदः, प्रियमित्येतदुपासीत” इत्याद्याः श्लोकाः, ब्राह्मणप्रभवा मन्त्राः “अर्वाखिल” इत्याद्याः; सूत्राणि वेदे वस्तु सङ्ग्राहकाणि वाक्यानि “आत्मेत्येवोप सीत” इत्येवमादीनि; अनुव्याख्यानानि वस्तुसङ्ग्राहकवाक्यानां विवरणवाक्यानि, यथा—“प्राणा वै सत्यम्” इत्येवमादिना शिशुमूर्तामूर्तब्राह्मणे व्याख्यानानि मेधया हि तपसाऽजनयत्पिता” इत्येवामादीनि; एतान्युक्ता ऋग्वेदादीनि मन्त्रब्राह्मणात्मकान्यस्यैवेश्वरस्य निःश्वसितानीत्याहुः । तदप्येते नैव दत्तोत्तरम् ।

अत्र श्रीमज्जयगोपालभट्टाः, बहिर्मुखमुखध्वंसे “न हि पुराणानां वेदमूलकत्वेन प्रामाण्यं वयमङ्गीकुर्मः, किन्तु परमाप्तमनित्यनिर्दुष्टसर्वज्ञभगवद्वचनत्वेन । वेदादीनां भगवद्वचत्वं तु बृहदारण्यकोपनिषदि प्रतिपादितम्; “अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि अस्यैवैतानि निःश्वसितानि” इति प्राणतुल्यताज्ञापनाय भगवत एतद्रूपं निःश्वासोच्छ्वासवत्ताज्ञापनाय वा ‘निःश्वसितपदं’ श्रुतौ प्रयुक्तम्; अत्र “पञ्चाङ्गवत्पुराणं स्यादाख्यानमितरत्स्मृतम्” इति मत्स्यपुराणीयपुराणानुक्रमणिकाप्रसङ्गीयमत्स्यवचनादाख्यानरूपमहाभारतादिकेतिहास एवेतिहासः, पुराणं पूर्वोक्तलक्षणाद्ब्राह्मादिकमेवेति; पुराणमित्येकवचनं तु “पुराणमेकमेवासीत्तस्मिन्कल्पान्तरेऽनघ” इति मत्स्यपुराण एवोक्तत्वात्, यावद्विभागमेकमेव तिष्ठतीत्यभिप्रा-

---

यामास वानरमित्यादिवदेव । किञ्च, दोषोऽपि तत्र वर्तत एवेति—तैरर्जितानीति वाक्यादिति दिक् ।

येण ज्ञेयम्; विद्याः, आयुर्विद्या, धनुर्विद्या, गान्धर्वविद्या, स्थापत्यविद्या, नीतिविद्या, शिक्षाकल्पव्याकरणच्छन्दो ज्योतिर्निरुक्तान्येव; उपनिषदो गीतादयोऽवतारद्वारा प्रकटाः; श्लोका रामायणादिस्था एव, तदारभ्यैव श्लोकप्रवृत्तेः; सूत्राणि व्याससूत्राणि; व्याससूत्राविरुद्धानि जैमिनिण्यन्यमुनिप्रणीत सूत्राण्येव; अनुव्याख्यानानि, "ब्रह्मणः कल्पसूत्राणि भाष्यं विद्यास्तथैव च" इति मत्स्यपुराणे प्रतिपादितत्वात् ब्रह्मादिकृतानीदानीं प्रचलद्रूपाणि भाष्याण्येव, वेदाद्युत्तरं प्रवृत्तत्वादनुव्याख्यानत्वम्; व्याख्यानानि निघण्टादीन्येव; अत्र पूर्वोक्तेतिहासपुराणविद्या श्लोकसूत्राणां वेदादिवाक्यार्थनिर्णायकत्वेनोपयोगो निरुक्तनिघण्टादीनां तु पदशक्तिनिर्णायकत्वेनोपयोग इति ज्ञेयम् । एतेन वेदपुराणेतिहासादीनामर्थः परस्परं तैरेव भगवन्निःश्वसितरूपैर्निश्चेतव्यो न तु स्वकपोलकल्पित इति मनसि विभावनीयं सुधीभिः । अत एव कूर्मपुराणे द्वादशाध्याये वेदचतुष्टयमनुनीतिधर्मशास्त्रपुराणोपपुराणान्युक्त्वा "शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च; ज्योतिःशास्त्रं न्यायविद्या सर्वेषामुपबृंहणम्" इत्युक्तम्; "इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्यन्यत्रोक्तम्; वेदोपबृंहकत्वमितिहासपुराणयोरपि "भारताख्यानमखिलं चक्रे श्रुत्युपबृंहितम्" इत्यत्रोपबृंहितपदेन भावार्थक्तान्तपक्षे वेदपुराणाद्युपबृंहणरूपत्वम्; कर्मार्थक्तान्तपक्षे भारतस्यापि वेदपुराणाद्युपबृंहकत्वमुक्तमिति दिक् ।

यत्तु, मायावादिन आचार्याः स्वकृतबृहदारण्यकभाष्ये तदनुसारिणो नित्यानन्दाश्रमाश्च स्वकृतबृहदारण्यकव्याख्यायां मिताक्षरायामेतां श्रुतिं व्याचक्षाणा एतच्छ्रुतिस्थेतिहासादिपदैः "उर्वशीहाप्सराः" इत्यादि ब्राह्मणभाग एवेतिहासत्वेन, "असद्वा इदमग्र आसीत्" इत्यादि ब्राह्मणभागरूपदेवजनविद्यैव विधात्वेन; "प्रियमित्येतदुपासीत", "प्रियेमेयोपासीत" इत्यादि वेदान्तर्गतैवोपनिषच्चोपनिषत्वेन; "अर्वाग्बिलश्चमसः" इत्यादिका वेदान्तर्गता एव च मन्त्ररूपाः श्लोकाः श्लोकत्वेन; "असत्यं" इत्यादिको वेदस्थवस्तुसङ्ग्राहकवाक्यरुसूत्रूण विवरणरूपो ब्राह्मणभाग एव चानुव्याख्यानत्वेन "मेधया हि तपसा जनयत्पिता" इत्येवमादिको ब्राह्मणभाग एव चात्र व्याख्यानत्वेनोच्यते; इत्याहुः—तच्चिन्त्यम्; वेदचतुष्टयान्तर्गतानामितिहासादीनामेवेतिहा-

सादित्वेन ग्रहणे तेषां वेदचतुष्टयान्तर्गतैव पाठात्; "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति वाक्याच्च वेदत्वाद्वेदचतुष्टये भगवन्निःश्वसितत्वप्रतिपादनेनैव वेदचतुष्टयान्तर्गतेतिहासादीनामपि ग्रहणमिति वाच्यम्; "उर्वशीहाप्सराः" इत्यादि ब्राह्मणमेव मन्त्रब्राह्मणयोरेव ग्रहणमित्यत्रोपक्रमोपसंहारसम्बन्धीमायावाद्याचार्यदत्तैवकारयोस्तदनुसारिनित्यानन्दाश्रमदत्तस्वकृतबृहदारण्यकभाष्यरूपमिताक्षरास्थान्यप्रतिवाक्यैवकाराणां विशेष्यसङ्गतैवकारत्वादन्ययोगव्यवच्छेदकार्थानां व्यर्थत्वापत्तेः। धन्यार्थकत्वेऽधिकार्थानागतेश्च। न च तर्हि, इतिहासादिपदैः किं ग्राह्यमिति वाच्यम्; इतिहासपदेन महाभारतरूपेतिहासस्यैव, पुराणपदेनाविभक्तब्राह्मादिपुराणविशिष्टत्वादेकत्वसंख्याविशिष्टस्य वेदान्तर्गतस्य पुराणस्यैव, विद्यापदेन षडङ्गविद्यादीनामेव, उपनिषत्पदेन भगवद्गीतादीनामेव, श्लोकपदेन रामायणादिस्थश्लोकानामेव, सूत्रपदेन व्यासजैमिनिसूत्राणामेव, अनुव्याख्यानपदेन "ब्रह्मणः कल्पसूत्राणि भाष्यविद्यास्तथैव च" इति मत्स्यपुराणसिद्धानां वेदोत्तराविर्भूतत्वादनुव्याख्यानरूपाणाम्; यद्वा, "ब्रह्मविदाप्नोति परम्" इत्यादि व्याख्यानरूपम्, "तदेषाभ्युक्ता" इत्यादि व्याख्यानरूपत्वादनुव्याख्यानरूपाणां वा ब्रह्मकृतभाष्याणामेव, व्याख्यानपदेन निघण्टादीनामेव चात्र ग्रहणम्। एवं चैतेषां पार्थक्येन ग्रहणस्य वैयर्थ्यम्। अस्मद्व्याख्यान एवं न भवतीति सुधीभिरेवाकलनीयमिति दिक्।

स्यादेतत्, "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः, भारताख्यानमखिलं चक्रे श्रुत्युपबृंहितम्" इति मात्स्यवाक्यादैतिह्यप्रसिद्धेश्च महाभारतरूपेतिहासे ब्रह्माण्डादिपुराणेषु च व्यासकृतत्वमेव, एवमेव जैमिनीसूत्रेषु जैमिनिकृतत्वम्, षडङ्गविद्यासु शिक्षाव्याकरणयोः पाणिनिकृतत्वम्, कल्पसूत्रेष्वापस्तम्बादिकृतत्वम्, निरुक्ते यास्कमुनिकृतत्वम्, गीतासु वेदादिप्रादुर्भावोत्तराविर्भूतश्रीदेवकीनन्दनादिकृतत्वम्, ब्रह्मकृतभाष्यरूपानुव्याख्यानेषु च ब्रह्मादिकृतत्वमिति परमात्मेश्वरनिःश्वसितत्वासम्भवादितिहासादिपदैर्महाभारतादीनां ग्रहणं तत्र कथं सङ्गच्छत इति चेत्?

अत्र वदामः, "तपश्चचार प्रथममसराणां पितामहः, आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः; पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्, नित्यं शब्दमयं ब्रह्म शतकोटिप्रविस्तरम्; अनन्तरं च वक्रेभ्यो वेदास्तस्य विनिर्गताः, मीमांसा न्यायविद्या च प्रमाणाष्टकसंयुता" इति मत्स्यपुराणीयतृतीयाध्यायस्थप्रघट्टकेन श्रीभगवता मत्स्येन वेदादिसर्वशास्त्रेभ्योऽपि पुराणस्य प्रसिद्धत्वज्ञापनपूर्वकभङ्गोपाङ्गपदक्रमसहितवेदचतुष्टयपुराणमीमांसान्यायविद्यास्मर्तृत्वमेवोक्तं ब्रह्मणः । एवमेव "पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते, नामतस्तानि वक्ष्यामि शृणुध्वं मुनिसत्तमाः" इत्युपक्रम्य नामतोऽष्टादश पुराणान्युक्त्वा "पञ्चाङ्गवत्पुराणं स्यादाख्यानं तदितत्मृतम्" इति पुराणव्याख्यानयोर्लक्षणमुक्त्वा; "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च, वंशानुचरितं चेति पुराणं पञ्चलक्षणम्" इत्यनेन पञ्चाङ्गान्युक्त्वा; "ब्रह्मविद्यार्करुद्राणां माहात्म्यं भुवनस्य च, ससम्प्रहारं दृश्येत पुराणं पञ्चवर्णकम्" इत्यनेन पुराणवर्णनीयपदार्थानुक्त्वा, "धर्मो ह्यर्थश्च कामश्च मोक्षश्च परिकीर्त्यते" इत्यनेन धर्मार्थकाममोक्षप्रतिपादकत्वं पुराणानामुक्त्वा, "सात्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः, राजसेषु च माहात्म्यमधिकं हरेः, राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः; तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च, सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते" इत्यनेन पुराणेषु परस्परविरोधपरिहाराय कल्पभेदेन समाधानमुक्त्वा, "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः, भारताख्यानमखिलं चक्रे श्रुत्युपबृंहितम्" इत्यनेन भारताख्यानमाविर्भावमुक्त्वा, "वाल्मिकिना तु यत्प्रोक्तं रामोपाख्यानमुत्तमम्, ब्रह्मणाभिहितं तत्तु शतकोटिप्रविस्तरम्, आहृत्य नारदायैव तेन वाल्मीकये पुनः, वाल्मिकिना तु लोकेषु धर्मकामार्थसाधनम्, पुरातनस्य कल्पस्य पुराणं तद्विदुर्बुधाः" इत्यनेन मत्स्यपुराणीयतृतीयाध्याय एव पुरातनकल्पपुराणरूपं शतकोटिप्रविस्तरम्, रामायणरूपाख्यानमाहृत्य सङ्क्षिप्य ब्रह्मणा नारदायाभिहितम्, तं स्मृत्वा कथितं न तु कृतमिति रामायणविषयकस्मर्तृत्वमेव ब्रह्मण उक्तम्, न तु स्वप्रयत्नसिद्धसाक्षात्कर्तृत्वम्; एवं ब्रह्मणोऽपि चेत् वेदपुराणादिस्मर्तृत्वं तदा तदनन्तराविर्भूतानां व्यासादीनां तु सुतरामेव पुराणादिस्मर्तृत्वं न तु पुराणादिषु साक्षा-

त्कर्तृत्वमित्यस्यां श्रुताविति‌हासादिपदैर्भारतरूपेतिहासादिग्रहणं सङ्गततरमिति सन्तुष्य एवं च अष्टादश पुराणानि कृत्वा" इति "भारताख्यानमखिलं चक्रे" इत्यत्र व्यासकर्तृत्वोक्तिस्तु तत्स्मरणकर्तृत्वविषया, गीतारूपोपनिषदस्तु देवकीनन्दनस्य साक्षाद्भगवत्त्वात्तस्याः स्मरणरूपत्वे साक्षात्कृतत्वेऽपि निःश्वसितत्वमस्त्येव। न च "ब्रह्मणाभिहितं तत्तु शतकोटिप्रविस्तरम्" इत्यत्राभिहितपदस्य श्रूयमाणत्वात्स्मृतमिति पदाभावात्कथं रामायणस्मर्तृत्वं ब्रह्मणकथ्यत इति वाच्यम्; रामायणस्य हि पुरातनकल्पीयपुराणत्वं "पुरातनस्य कल्पस्य पुराणं तद्विदुर्बुधाः" इत्यनेन प्रतिपादितमस्ति। एवं च "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्" इति वचनसिद्धपुराणविषयकल्पनोपपत्तेः। न च स्मृतमिति पदेन ब्रह्मणा पूर्वकल्पे कृतमस्मिन् कल्पे स्मृतमिति स्वकर्तृकस्यैव वेदसहितेतिहासपुराणादेः स्मरणमत्रोच्यत इति वाच्यम्; एतादृशार्थबोधकस्य वेदादिप्रमाणस्यानुपलभ्यमानत्वात्; "स्वयम्भूरेष भगवान् वेदोगीतस्त्वया पुरा, शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः" इत्यादि देवीपुराणवचनैस्तत्सजातीयान्यपुराणवचनैश्च शिवादीनामादिपदोक्तब्रह्मादीनामृषिपर्यन्तानां कारकत्वनिषेधपूर्वकं शिवब्रह्मादिषु वेदादिस्मर्तृत्वस्यैव प्रतिपादनाच्च। न चास्मिन् वचने वेदमात्रस्मर्तृत्वमेव कारकत्वनिषेधपूर्वकमुच्यते, न तु पुराणेतिहासस्मर्तृत्वम्; वेदपदेन पुराणेतिहासादीनामग्रहणादिति वाच्यम्; "ऋग्वेदो भगवोऽध्येमि यजुर्वेदं सामवेदमितिहासपुराणं पञ्चमं वेदानां वेदम्" इति सामवेदकौथुमीयशाखीयछान्दोग्योपनिषच्छ्रुत्येतिहासपुराणयोर्वेदत्वोक्तेः, इतिहासपुराणयोरङ्गोपाङ्गानां चाङ्गिसहभावनियमाच्छिक्षाकल्पो व्याकरणं छन्दोज्योतिर्निरुक्तरूपवेदाङ्गानां प्रतिपदमनुपदं छन्दोभाषाधर्मो मीमांसा न्यायस्तर्क इति वेदोपाङ्गानां च चरणव्यूहोक्तानां वेदावयवत्वाद्वेदत्वात्। गीताद्युपनिषदामुपनिषत्त्वेन वेदत्वाच्च वेदशब्देनैव ग्रहणात्तत्तत्स्मर्तृत्वस्यापि निःप्रत्यूहत्वात्। अत्र "प्रतिः प्रतिनिधौ वीप्सालक्षणादौ प्रदर्शितः" इति विश्वकोषोक्तेः प्रतिनिधीभूतानि पदानि यस्मिंस्तत्प्रतिपदम् निघण्टुरूपं यन्निःश्वसितमिति श्रुतौ व्याख्यानपदेनोक्तम्, अनुपशब्देन–अनूपपद्यते ज्ञायतेऽर्थोऽनेनेति व्युत्पत्तिसिद्धं ब्रह्मकृतभाष्यं यन्निःश्वसितश्रुतावनुव्याख्यानप-

यया प्रातिशाख्यादिरूपया कृत्या सा छन्दोभाषा प्रातिशाख्यादिः; धर्मशब्देन "अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्" इति स्मृतेर्हिरण्यगर्भादिकृतो योगनिरूपको ग्रन्थः, मीमांसाशब्देन पूर्वमीमांसोत्तरमीमांसासूत्राणि, न्यायशब्देन "आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च" इति श्रीभागवतादिपुराणोक्तचतुर्विधनीतिप्रतिपादको ग्रन्थो महाभारतरूपेतिहासः "धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ, यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति वचनाच्चतुर्विधः, मर्यादायास्तत्रैव दृश्यमानत्वात्। एवं च चतुर्दशविद्यासु न्यायशब्देनैवेतिहासस्य ग्रहणम् । अन्यथा चतुर्दशविद्याबहिर्भूतत्वं महाभारतस्य विद्याधर्मस्थानत्वाभावश्च प्रसज्जेत । अत्र ह्यात्मविद्यामर्यादारूपाऽन्वीक्षिकी साङ्ख्यज्ञानरूपौपनिषदज्ञानरूपमर्यादाभेदेन द्विविधा ज्ञेया । तर्कशब्देन गोतमप्रणीतं न्यायशास्त्रं कणादप्रणीतं वैशेषिकशास्त्रं च बोध्यम् ।

ननु व्यासादीनां मास्तु सङ्क्षेपविभागविस्तररहितेषु महाभारतादीतिहासपुराणादिकर्तृत्वं तु वर्तत एव, तेषां तदर्थमेवावतारात्; एवं च सङ्क्षेपविभागविस्तरयुक्तेतिहासपुराणादिकस्य भिन्नानुपूर्वीकत्वेन भिन्नत्वात्तादृशानामेवेदानीं प्रचरद्रूपत्वात्परमेश्वरनिःश्वसितत्वाभावादितिहासपुराणादिपदैः प्रचरद्रूपमहाभारतरूपेतिहासाष्टादशपुराणादिकस्य ग्रहणमस्यां श्रुतौ कथं सामञ्जस्यमापद्येतेति चेत् ?

अत्रोच्यते, सङ्क्षेपविभागविस्तराणामपि भगवत्कर्तृकत्वेन व्यासादिकर्तृकत्वाभावात्; अत एव "पुराणमेकमेवासीत्तस्मिन्कल्पान्तरेऽनघ, त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्" कस्मिंश्चित्कल्पे पुराणस्यैकत्वं त्रिवर्गसाधनत्वं शतकोटिप्रविस्तरत्वमुक्त्वा "निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया, अङ्गानि चतुरो वेदाः पुराणन्यायविस्तरः, मीमांसाधर्मशास्त्रं च परिगृह्यात्मसात्कृतम्" इत्यनेन प्रलये चतुर्दशविद्यानामात्मसात्करणं प्रतिपाद्य "मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे, अशेषमेतत्कथितमुदकान्तर्गतेन वै"

---

पुनः शङ्कते—नन्विति। **तदर्थमिति** । सङ्क्षेपविस्तरार्थम् । **भिन्नेति** । समानानुपूर्व्यैव तादृशसमानत्वे मानमिति भावः । अत एवाह-**कथं सामञ्जस्यमिति** ।

इत्यनेन मया ब्रह्मणे चतुर्दशविद्याः पुनः कथिता इति निरूप्य "श्रुत्वा जगाद च मुनीन् प्रतिवेदं चतुर्मुखः प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः" इत्यनेन चतुर्मुखो मत्तश्चतुर्दशविद्याः श्रुत्वा जैमिनिभ्यो मुनिभ्यश्चोक्तवान्; ततो लोके सर्वशास्त्राणां पुराणस्य च प्रवृत्तिर्जातेत्युक्त्वा, "कालेनाग्रहणं मत्वा पुराणस्य ततो नृप, व्यासरूपमहं कृत्वा संहरामि युगे युगे, चतुर्लक्षप्रमाणेन द्वापरे द्वापरे तथा, तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते; अद्यापि देवलोकेषु शतकोटिप्रविस्तरम्, तदर्थोऽत्र चतुर्लक्षः सङ्क्षेपेण प्रदर्शितः" इत्यनेन "व्यासरूपं कृत्वाऽहं संहरामि" इति वाक्येन पुराणसङ्क्षेपकर्तृत्वम् "तदष्टादशधा कृत्वा" इत्यनेन पुराणविभागकर्तृत्वम्, "प्रभाष्यते" इत्यनेन प्रकर्षेण भाष्यते विस्तरेण कथ्यते, इत्यर्थकेन पुराणविस्तारकर्तृत्वमपि, भगवता मत्स्येन स्वस्यैव मत्स्यपुराणीयतृतीयाध्यायस्थे पुराणानुक्रमणिकाप्रसङ्गे प्रतिपादितम्। एवमेव वेदविषयकसङ्क्षेपविभागविस्तरकर्तृत्वमपि भगवत एवेति "वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः, करोति बहुलं भूयो वेदव्यासस्वरूपधृक्" इतिविष्णुपुराणीयद्वितीयांशतृतीयाध्यायसमाप्तिस्थवचनेनोक्तम्।

अस्यार्थः, "शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम्, अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत्" इति भागवतैकादशस्कन्धीयवचनादेवंजातीयकान्यपुराणस्थवचनाच्च शब्दतोऽर्थतश्चानन्तं वेदं "एके मुख्यान्यकेवलाः" इति कोषादेकमन्यं शतसहस्रपरिमितं तावच्छ्लोकयुक्तं वा, एवं सङ्क्षेपं कृत्वा भूयः पुनश्चतुर्भेदमृग्यजुःसामाथर्वभेदेन विभक्तं कृत्वा पुनः शाखाशतैर्बहुलं विस्तारयुक्तं वेदव्यासरूपधृक्; "ततोऽत्र मत्सुतो व्यासो ह्यष्टाविंशतिमेन्तरे, वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः" इत्यादिना विष्णुपुराणीयतृतीयांशस्थचतुर्थाध्याय एव शतसाहस्रसम्मितो वेदो भगवता कृत इत्यस्यार्थस्योक्तत्वात्। न च नित्यसिद्ध एव वेदः शतसाहस्रसम्मित इति नित्यसिद्धपरिमाण एवेति वाच्यम्; श्रीभागवतीयैकादशस्कन्धीयवचनोक्तानां तत्त्वानां बाधापत्तेः। तस्माच्छ्रीभागवतोक्तानन्तत्वस्य वेदस्य भगवता प्रथमतः शतसहस्रसम्मितत्वरूपः सङ्क्षेपः कृतः, पश्चाच्चतुर्धा विभागः कृतः, पश्चाच्छाखाभेदैः पुनरपि विस्तरो भगवतैव कृत इति वेदपुराणसङ्क्षेपविभागविस्तरकर्तृत्वमपि भगवत

**सङ्क्षेपविस्तरविभागानां दृश्यमानत्वाभावाच्छ्रूयमाणत्वाभावाच्च त्वदुक्त्यनव-काश एवेति दिक्।**

**वस्तुतस्तु, ब्रह्मव्यासश्रीमद्देवकीनन्दनकृतभिन्नानुपूर्विकसङ्क्षेपविभागविस्तर-विशिष्टेष्वेतच्छ्रुत्युक्तवदितिहासादिषु पुराणगीताब्रह्मसूत्रब्रह्मकृतभाष्येषु भग-वन्निःश्वसितत्वेऽपि न क्षतिः ब्रह्मव्यासयोर्भगवदवतारत्वात्। श्रीमद्देवकी-नन्दनस्य तु "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः, अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति साक्षात्परमात्मेश्वरत्वरूपत्वात्, शिक्षाकल्प-व्याकरणछन्दोज्योतिर्निरुक्तेषु तु पाणिन्यादिवत्स्मृतित्वमेव। तत्कर्तृणां जीव-**

---

**त्वदुक्त्यनवकाश** इत्यन्तेन।

वाङ्मयमात्रं प्रमाणमिति "अथवा सर्वरूपत्वान्नामलीलाविभेदतः" इत्यादिश्रीमदाचार्यचरणोक्तं सिद्धान्तमेव भङ्ग्यन्तरेण स्फोरयन्ति—**वस्तुतस्त्वित्यादिना**। तथासत्यपि अङ्गादीनां स्मृतित्वं व्यवस्थापयितुमाहुः—**शिक्षेति**। तत्र हेतुमाहुः—**जीवत्वादिति**। अयम्भावः, "साङ्गो वेदोऽध्येयो ज्ञेयश्च" इतिश्रुतेः साङ्गवेदाध्ययनं विधीयते। तत्र शिक्षादीनां प्राङ्-निरूपितप्रकारेण भगवन्निःश्वसितत्वेऽपि, सम्प्रति समुपलभ्यमानानां शिक्षादिग्रन्थानां कर्तारो पाणिन्यादयो वर्तन्ते, अत एव तत्र जीवकृतत्वात्स्मृतित्वम्। तच्च निपुणं विवेचितमुपरितनग्रन्थे। तथा च सर्वनिर्णये श्रुतिस्मृतिपुराणनिरूपणानन्तरमङ्गानां निरूपणम्। तत्र साक्षा-द्धर्मप्रतीतेः कल्पसूत्राणां वेदत्वं स्मृतित्वं चेत्युभयरूपत्वं निर्णीतम्। शिक्षादीनां च वेदा-ङ्गत्वाद्वेदत्वमेवेति। अत्र हि वेदोपकारकत्वात्पाणिन्यादिप्रणीतत्वोक्तेश्च स्मृतित्वेऽपि न दोषः। वेदार्थनिर्णायकतया धर्मप्रतीतिहेतुत्वात्। तत्र शिक्षा छन्दश्च स्वरूपे, निरुक्तं व्याकृतिश्चार्थे, ज्योतिः कल्पश्चानुष्ठाने उपकुर्वन्ति। तत्र शिक्षा "अथ शिक्षां प्रवक्ष्यामि" इत्यादि पञ्चखण्डात्मिका पाणिनिप्रकाशिता। ननु "अथातस्त्रैस्वर्यलक्षणं व्याख्यास्यामः" इत्यादियाज्ञवल्क्यादिशिक्षाणां विद्यमानत्वात्तत्तच्छाखासु तदध्ययनस्य चावश्यकत्वात्कथं पाणिनिप्रकाशिता शिक्षेत्युच्यत इति चेत्, सत्यपि शिक्षाबाहुल्ये शाखाभेदेनैव तदुपयोगात्, पाणिनिशिक्षायाश्च सर्ववेदसाधारणत्वादिति न कश्चिदपि विरोधः। शिक्षायाः प्रयोजनं चोदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतविशिष्टस्वरव्यञ्जनात्मकवर्णविशेषज्ञानम्, उच्चारणप्रकारविशे-षज्ञानं चेति स्वरूप उपयोगः। तदभावे मन्त्राणामनर्थजनकत्वं स्यात् "मन्त्रो हीनः स्वरतो वर्णतो वे"तिवाक्यात्। छन्दस्तु, मयरसतजभनेत्याद्यष्टाध्यायात्मकं पिङ्गलेन प्रकाशितम्।

**त्वात् । स्मृतयस्तु न भगवन्निःश्वासभूताः, किन्तु, ऋषिप्रणीतास्तेन तासामर्थस्तु वेदाविरुद्ध एव ग्राह्यो न तु तद्विरुद्धः । अत एवोदाहृतबृहदारण्यकश्रुतौ स्मृत्यादीनामनुपादानम् । भगवन्निःश्वसितत्वे तु तदप्युक्तं स्यात् । अत एव श्रुतेः सकाशात्समाने विषये स्मृतीनां दुर्बलोक्तिः**

---

छन्दांसि च मन्त्रेषूपयुक्तानि; अन्यथा गायत्र्यादौ वरेणियमिति व्यवायेन पाठो न स्यात्; तदभावे च मन्त्रो वर्णतो हीयेत । अतश्छन्दसोऽपि स्वरूपोपयोगः । व्याकरणस्य यः स्वराद्युपयोगः सोऽर्थद्वारकः । यथेन्द्रशत्रुपदे स्वरभेदेन बहुव्रीहिणाऽर्थस्य वैपरीत्यमभूदिति । अतः व्याकरणस्य पदसाधुताज्ञानरूपमेव प्रयोजनं स्फुटं प्रतीयते । निरुक्तं च यास्ककृतं "समाम्नायः समाम्नातः" इत्यादित्रयोदशाध्यायात्मकम् । तत्र च नामाख्यातनिपातोपसर्गरूपं चतुर्विधं पदजातं निरूप्य मन्त्राणामर्थो दर्शितः । अन्यथा सृण्येव जर्फरीतुर्फरीपर्फरीभूरित्याद्यतिदुरूहपदानामर्थो न ज्ञायेतेति तदावश्यकत्वम् । निघण्टुस्तु निरुक्तशेषत्वेनोपयुक्तः । दर्शादिकालनिर्धारे ज्योतिःशास्त्रमुपकरोति । कल्पस्तु प्रयोगेषूपयुक्तः । एवं चैतेषां वेदाङ्गत्वाद्वेदत्वेऽपि स्मृतिरूपतया न क्षतिः । **ऋषिप्रणीता** इति । मन्वादिप्रणीता इत्यर्थः । मन्वादिभिश्च विप्रकीर्णश्रुत्यर्थसमुदायतयैताः स्वस्वशिष्यान्प्रति कथिताः, न तु स्वकपोलकल्पनया । तदुक्तं स्मृतिपादे "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यादि"ति । श्रीमदाचार्यचरणा अपि "स्मृतिर्बहुविधा प्रोक्ता" इत्यारभ्य "धर्मः सम्पद्यते षड्भिरधर्मो ह्यन्यथा भवेत्" इत्यन्तेन तत्स्वरूपतत्प्रामाण्यतद्विषयादिकं च प्राहुः । तत्र "ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यत" इत्यनेन तल्लक्षणं प्राहुः । ऋषीणामिति कर्तृषष्ठी । तेन ऋषिकर्तृकं पूर्वाचारस्मरणप्रयुक्तं वाक्यं स्मृतिरिति प्रमाणलक्षणम् । **तद्विरुद्धः** । वेदविरुद्धः । **दुर्बलोक्तिरि**ति । "विरोधेत्वनपेक्षं स्यादसति ह्यनुमानमि"ति जैमिनिसूत्रेणेत्यर्थः । तदुपपत्तिश्चेत्थम्–"औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति प्रत्यक्षश्रुतिविरुद्धा "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः प्रमाणमप्रमाणं वेति संशयः । प्रत्यक्षश्रुतिविरुद्धापि स्मृतिः प्रमाणम्, पूर्वाधिकरणन्यायेन अनुमितवेदमूलकत्वात् । न ह्यनुमितत्वेनानुमिता श्रुतिर्दुर्बला प्रत्यक्षत्वेन प्रत्यक्षा प्रबला । बाधिताबाधितार्थकत्वमेव हि तत्र बीजम् । न चेहान्यतरत्र तत्सम्भवः, उभयोरपि प्रत्यक्षानुमितयोः श्रुतित्वाविशेषात् । तथा च षोडशिग्रहणाग्रहणवद्व्रीहियववच्च विकल्प इति प्राप्ते—विरोधे त्विति सूत्रम् । तुरष्टकादिस्मृतिवैषम्ये । प्रत्यक्षश्रुतिविरोधे सति अनपेक्षं मूलप्रमाणानपेक्षं श्रुतिवाक्यमेव प्रमाणं स्यात्, न तु स्मृतिवाक्यम्, तस्य मूलश्रुत्यपेक्षत्वात् तथाविधश्रुतौ च प्रमाणाभावात् ।

त्स्पर्शनसर्ववेष्टनयोरभित्तिचित्रायितो विकल्पः । ग्रहणादिविषये तु तच्छास्त्रयोः प्रत्यक्षत्वाद्विकल्पो युक्तः । इतोऽपि सर्ववेष्टनश्रुतिरप्रमाणमित्याह—हेतुदर्शनाच्च । लोभादिना हेतुना सर्ववेष्टनस्मृतेः प्रवृत्तिदर्शनादित्यर्थः । सर्ववेष्टनस्य महतैव वाससा साध्यत्वात्तद्ग्रहणलोभेन सर्ववेष्टनस्मृतिः प्रवृत्ता स्यात् । अतो लोभादिमूलिका एवंजातीयका स्मृतिरप्रमाणम् । चकारोऽभ्युच्चये । प्रत्यक्षश्रुतिविरोधे सति स्मृत्यनुमानस्यानुन्मेषे पूर्वसूत्रेण वर्णिते परिशेषादेव यथोचितं लोभादिकल्पनस्य सिद्धेः । अत एव वाधिकरणान्तरपरमस्तु । तथा हि—सन्ति ज्योतिष्टोमे वैसर्जनाख्या होमाः "वैसर्जनानि जुहोति" इति । तत्र "अध्वर्युं यजमानोन्वारभते यजमानं पत्नी पत्नीमितरे पुत्रभ्रातरोऽहतेन वाससा सम्प्रच्छन्ना भवन्ति" इति विहितं वासः प्रकृत्य स्मरन्ति "वैसर्जनीयं वासोऽध्वर्युर्गृह्णाति" इति । तदिदं वैदिकपरिगृहीतत्वात्प्रत्यक्षश्रुतिविरोधाभावाच्च प्रमाणम् । न च सर्ववेष्टनादिस्मृतिवल्लोभादिमूलकल्पनसम्भवः । तत्र हि प्रत्यक्षविरोधात्तथाकल्पनम् । न चात्र तद्विरोधोस्ति, येन, तथा कल्प्येत । सम्भावनामात्रेण च लोभादिमूलत्वकल्पनायां दानविषयस्मृतिमात्रस्य प्रामाण्योच्छेदापत्तिः । अत एवंजातीयकं स्मरणं प्रमाणम्, इति प्राप्ते, सिद्धान्तयति—हेतुदर्शनाच्चेति । चोप्यर्थे । प्रत्यक्षश्रुतिविरुद्धा स्मृतिरप्रमाणम् । कुतः ? हेतुदर्शनात् । प्रकीर्णकतया पठ्यमानत्वेन वैसर्जनस्मृतेर्लोभादिमूलकत्वसम्भवेऽपि मन्वादिप्रणीताष्टकादिसहपठिततया दानादिस्मृतीनां न लोभमूलकत्वावकाशः । ततश्च वस्त्रलोलुपेन केनचिदध्वर्युणा प्रवर्तितेयं स्मृतिरप्रमाणम् । तदेवं प्रत्यक्षश्रुतिविरुद्धं लोभादिमूलकमपि स्मरणमप्रमाणमिति भाष्यानुयायी पन्थाः । तत्र प्रत्यक्षश्रुतिविरुद्धं स्मरणमप्रमाणमिति प्रथमाधिकरणमनुपपन्नम् । तथाहि—औष्ण्यशैत्ययोः स्वरूपेण परस्परविरोधित्वाद्वह्नावौष्ण्यप्रत्यक्षेण शैत्यानुमानबाधो युज्यते । स्पर्शनश्रुतिप्रत्यक्षेण तु सर्ववेष्टनश्रुत्यनुमानस्य बाधो न सम्भवति, तयोः श्रुत्योः स्वरूपेण विरोधाभावात् । अर्थतो विरोधस्तु सर्ववेष्टनश्रुत्यनुमानोत्तरकालिकस्फूर्तिको न तदनुमानप्रवृत्तिं बाधितुं क्षमते, विरोधस्य तदानीमलब्धात्मकत्वात् । प्रवृत्ते तु तदनुमाने प्रत्यक्षानुमितश्रुत्योरुभयोरपि श्रुतित्वाविशेषात्सन्नप्यर्थतो विरोधो युगपदेव तदनुष्ठानद्वयं बाधते, स्पर्शनसर्ववेष्टनयोर्युगपत्कर्तुमशक्यत्वात् । कस्मिंश्चित्प्रयोगे स्पर्शनं प्रयोगान्तरे सर्ववेष्टनमित्येवं कालभेदेन तदुभयानुष्ठानं तु निर्बाधमेव, विरोधाभावात् । तथा च व्रीहियवादिशास्त्रवत्कालभेदेन स्पर्शनसर्ववेष्टनश्रुत्योरपि प्रामाण्यं निर्बाधमिति सर्वदा तदप्रामाण्यवर्णनमनुपपन्नम् । तथा द्वितीयाधिकरणमप्यनुपपन्नम्, प्रकीर्णकस्मृतीनामपि सकलवैदिकशिष्टैर्धर्मबुद्ध्या तदर्थानुष्ठानस्याद्रियमाणतया दानादिस्मृतिवत्प्रामाण्यस्यावश्याङ्गीकार्यत्वादित्यादिदूषणान्युद्भाव्य सूत्रद्वयमिदमन्यथा योजितं

तया तद्विस्रम्भविषये मूलानुसन्धानापेक्षत्वात् । विस्रम्भणीयस्य प्रत्यक्षश्रुतिवाक्ये असति स्मृतिमूलश्रुतिप्रत्यक्षस्य परकीयस्य विस्रम्भविषये अनुमानं मूलानुसन्धानं क्लिष्टमपेक्ष्यते । स्वप्रत्यक्षस्य हि विस्रम्भणीयत्वात्तस्मिन्सत्यनुष्ठानप्रतीतिः स्वारसिकी । परकीयप्रत्यक्षस्य तु विस्रम्भमूलानुसन्धानसापेक्षत्वात्तस्मिन्सति नैवम् । अस्ति चात्र विस्रम्भणीया प्रत्यक्षा श्रुतिः । अतः सैवानुष्ठाने प्रमाणं यावत्स्मृतिमूलश्रुतिः प्रत्यक्षतो नोपलभ्यते । तदुपलम्भोत्तरं तु द्वयोरपि व्रीहियवादिश्रुतिवद्विकल्प आदर्तव्यः । ततश्च कदाचित्फलतः अप्रामाण्यं प्रत्यक्षश्रुतिविरुद्धस्मृतेरिति सिद्धम् । हेतुदर्शनादिति सूत्रमप्यत्रैवार्थे युक्त्यन्तरपरं योज्यम् । स्मर्तॄणां सर्ववेष्टनश्रुतिप्रत्यक्षे सत्यपि न्यायाभासात्मकहेतुदर्शनसम्भावनया विस्रम्भः प्रतिबध्यत इति । तदेवं योजनायामनुष्ठानपदाध्याहारे गौरवं मत्वा वर्णकान्तरं वर्णितं वार्तिके । तद्यथा–यानि वैदिकशिष्टैरपरिगृहीतानि शाक्यादिनिबन्धनानि त्रयीविपरीतार्थानि अहिंसासत्यवचनशमदमदानादि प्रतिकञ्चुकच्छायाबहुलानि साङ्ख्ययोगपाञ्चरात्रादीनि च धर्मशास्त्राभासानि तेषां प्रत्यक्षादिमूलकतया प्रामाण्यं निराकृतं तर्कपादे "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणाम्" इत्यादिसूत्रे वार्तिके । इदानीं सम्भावितवेदमूलकतया प्रामाण्यं तेषां निराकर्तुमधिकरणमिदमारभ्यते । मन्वादिस्मृतिवत्तेषामप्यस्ति वेदमूलकतया प्रामाण्यम् । न च तन्मूलश्रुतीनां मन्वाद्यदृष्टतया कथं तत्प्रामाण्यमिति वाच्यम्, मन्वादिदृष्टवेदचतुष्टयाद्भिन्नप्रस्थानानामेव वेदानां तत्र मूलत्वसम्भवात् । नच "चत्वारो वेदाः" इति लोकप्रसिद्धिविरोधः, प्रसिद्धेर्मन्वादिदृष्टमात्राभिप्रायकत्वात् । सर्वदा च प्रवाहनित्यतया मन्वादिस्वीकारान्नानित्यसंयोगः । अत एव "यद्वै किञ्च मनुरवदत्" इत्यादि सङ्गच्छते । अस्तु वा चत्वार एव वेदा इति; तथापि वेदमूलकत्वमेषां न विरुध्यते । ऋग्यजुःसामवेदेषु हि धर्मबोधकेषु असङ्ख्येयाः शाखाः सन्ति । तत्र काश्चिदेव ऋषिभिर्दृष्टाः । न हि सर्वा अपि शाखाः पुरुषायुषेणापि कथमपि केनचिद्द्रष्टुं शक्याः, आनन्त्याच्छाखानामल्पत्वाच्च पुरुषायुषस्य । अत एव भरद्वाजस्य महानुभावस्यापि सर्ववेदाध्ययनाय सगर्वं प्रवृत्तस्य कतिपयशाखाध्ययनमात्रेण जराप्रवृत्तिमनधीतानां शाखानामानन्त्यादशक्याध्ययनत्वं च दर्शयति काठकश्रुतिः—"भरद्वाजो ह त्रिभिरायुभिर्ब्रह्मचर्यमुवास । तꣳह जीर्णꣳ स्थविरꣳ शयानमिन्द्र उपव्रज्योवाच, भरद्वाज यत्ते चतुर्थमायुर्दद्यां किमनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच । तꣳह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार । तेषाꣳहैकैकस्मान्मुष्टिमाददे । स होवाच । भरद्वाजेत्यामन्त्र्य । वेदा वा एते । अनन्ता वै वेदाः । एतद्वा एतैस्त्रिभिरायुभिरन्ववोचेथाः । अथ त इतरदननूक्तमेव" इति । तथा च मन्वाद्यदृष्टवेदमूलकत्वसम्भवादेषामस्ति प्रामाण्यम् ।

श्रुतिलिङ्गसूत्रोक्ता, "श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी"ति स्मृत्युक्ताच

---

मपि वेदमूलकतया प्रामाण्यशङ्कया तत्परिग्रहः प्रसज्येतेति तामिमां शङ्कां मन्दविधन्यायेन निराकरोति—विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति । प्रमाणमित्यनुवर्तते, तुशब्दः शङ्काव्यावृत्तौ । शाक्यादिग्रन्थानां वैदिकशिष्टपरिगृहीतप्रत्यक्षश्रुतिविरोधे सति मूलान्तरानपेक्षं श्रुतिवाक्यजातमेव प्रमाणं न तु तद्विरुद्धशाक्यादिग्रन्थजातम्, पौरुषेयत्वात् । न च श्रुतिमूलकतया प्रामाण्यम्, मूलश्रुतौ प्रमाणाभावात् । ननु स्मृत्यैव श्रुतिरनुमीयताम्, तत्राह—असति ह्यनुमानमिति । असति हि प्रत्यक्षश्रुतिविरोधे मूलश्रुत्यनुमानमुदेतुमुत्सहेत । अयम्भावः—वेदेषु दृढविस्रब्धमन्वादिस्मृतीनां तथाविधवैदिकदृढपरिग्रहान्यथानुपपत्त्या मूलश्रुतिकल्पकत्वं युज्यते । शाक्यादिग्रन्थेषु त्विदं विपरीतम्, वैदिकपरिग्रहाभावात्, वेदविद्वेषिपरिग्रहाच्च । न च वैदिकपरिग्रहाभावेऽपि अहिंसादिकतिपयवैदिकार्थगन्धवासितत्वेन हेतुना मूलश्रुत्यनुमानं स्यादिति वाच्यम्, वेदविद्वेषिजनपरिग्रहेण वेदमूलकत्वव्यतिरेकस्य निश्चिततया हेत्वन्तरेणापि मूलश्रुत्यनुमानाप्रवृत्तेः । साङ्ख्ययोगादिशास्त्रेषु वैदिकपरिग्रहो यदंशेऽस्त्युपासनादिविषये तदंशे प्रामाण्यमिष्टमेव । यदंशे तु प्रपञ्चसत्यत्वमिथ्यात्वद्वैताद्वैतादिविषये विहितस्य हिंसादोषास्तित्वादिविरुद्धवामाचारप्रचुरत्वात्सर्वथैवाप्रामाण्यम् । "भरद्वाजो ह त्रिभिः" इत्यादिः सावित्रार्थवादः । तत्रानन्तपदमेकविंशतिर्बाह्वृच्यमित्यादिशाखापरिमाणस्यातिविस्तृतत्वपरमित्यदोषः । अत एव श्वेतकेतुं प्रकृत्य "सर्वान्वेदानधीत्य" इति छान्दोग्यश्रुतिः सङ्गच्छते । यदपि शाक्यादिनिबन्धेषु पाञ्चरात्राद्यागमेषु च क्वचित्क्वचिद्वेदबोधितमेवाहिंसादिकमुपासनादिकं चोपनिबद्धं तदागमप्रचारसिद्ध्यर्थमेवोपनिबद्धमिति तदनुष्ठानं वैदिकानां न तन्मूलकतया, किन्तु वेदमूलकतयैवेति । तदेवं शाक्यादिग्रन्थानामविगीतवैदिकशिष्टपरिग्रहाभावाद्वेदविद्वेषिजनपरिग्रहाच्च न वेदमूलकतया प्रामाण्यम् । इतोऽपि तेषामप्रामाण्यमित्याह—हेतुदर्शनाच्चेति । असिद्धहेतुदर्शनाच्चेत्यर्थः । शाक्यादिभिर्हि स्वप्रतिपाद्यानि सर्वाणि हेतुभिरेव प्रायेणोपन्यस्यन्ते "अष्टका पितृदैवत्या इत्ययं प्रसृतो जनः । अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति । यदि भुक्तमिहान्येन देहमन्यस्य गच्छति । दद्यात्प्रसवतः श्राद्धं न तत्पथ्यशनं भवेत् । निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते । स्वपिता यजमानेन किं नु तेन न हन्यते । जीवस्यावरणं देहो देहस्यावरणं कुतः । यदि तस्यापि कार्यं स्यात्तस्यापि ह्यनवस्थितिः । मलभाण्डं शुचि भवेद्बहिःक्षालनतः कथम् । गव्यं पयश्चेत्पीयेत मांसैः किमपराध्यते" इत्यादिना । न च मन्वादयः स्वप्रतिपाद्ये सर्वत्र हेतूनुपन्यस्यन्ति । न चैवं हेतुमूलकतयैव शाक्यादिग्रन्थानां प्रामाण्यं किं न स्यादिति वाच्यम्; तदीयहेतूनामस-

सङ्गच्छते; अन्यथा विकल्पापत्तिः कृता स्यात्; तस्माद् बृहदारण्यकश्रुतिपरिगणितानां सर्वेषां भगवद्वचनत्वेनैव प्रामाण्यम्, न तु तेषु केषां चिदपि वेदमूलकत्वेनेति; अन्यथा वेदेऽपि किम्मूलकं प्रामाण्यमिति प्रश्ने किमुत्तरम्? भगवन्निःश्वसितत्वमिति चेत्; तर्हि तदेवास्तु सर्वत्र मूलप्रामाण्ये किं वेदमूलकत्वाद्युक्तिभिरिति।

एवं च सति बृहदारण्यकश्रुत्युक्तेषु भगवन्निःश्वसितभूतेषु वेदपुराणेतिहासादिषु समत्वेन क्वचिद्विकल्पः, क्वचित्सामान्यविशेषभावश्चाङ्गीकर्तव्योऽत्रत्यवचनबलादिति परिभावनीयम्। यदि च नास्माभिर्वेदपुराणवचनयोर्विकल्प आश्रयणीयो वैदिकवचनद्वय एव विकल्प आश्रयणीयः, "अतिरात्रे षोडशिनं गृह्णाति", "नातिरात्रे षोडशिनं गृह्णाति", इत्यत्रेवेत्यत्राहस्म। "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं वेदानां पञ्चमं वेदम्" इति सामकौथुमीयशाखीयछान्दोग्योपनिषच्छ्रुतेः। अथ च

---

ङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति जैमिनीयं सूत्रम्। स चायं प्राबल्यदौर्बल्यविचारोऽङ्गाङ्गिविचाराधीन एव। न तु श्रुतिस्मृत्योर्विरोधे प्रवर्तते सः। तथापि प्रथमाध्यायद्वितीयपादेन साधितेऽपि श्रुतिप्राबल्ये कदाचित्कुत्रचिदङ्गाङ्गिभावेन प्रवृत्ते स्मृत्या श्रुतिबाधे, सोऽपि श्रुतिलिङ्गेत्यादिना परिहरणीय एवेत्याशयः। अन्यथा भाष्यकारस्य श्रुतिलिङ्गसूत्रोक्तत्युक्तिरेव निरर्थकत्वमापद्येत। निरपेक्षः शब्दः श्रुतिः, अर्थप्रकाशनसामर्थ्यं लिङ्गमित्यादिश्रुत्यादीनां लक्षणानि, "व्रीहीन्प्रोक्षति" "ऐन्द्रया गार्हपत्यमुपतिष्ठते"इत्यादीनि तदुदाहरणानि च, तत्र बाध्यबाधकभावश्चेत्यादिकं पूर्वतन्त्रतृतीयाध्यायादूह्यम्। प्रकृते तदनुपयोगान्नात्र लिख्यते। एवं श्रुतिस्मृतिविरोधे श्रुतेरेव प्राबल्यं स्मृतिपादोक्तविधया प्रसाध्य तत्र स्मृतिमपि प्रमाणयन्ति—**श्रुतीति**। सकाशादिति पदं तु अपेक्षाधीनमतो न तस्य शाब्दबोधोपयोगित्वमिति। **विकल्पापत्तिरिति**। "उदिते जुहोति" "अनुदिते जुहोति"इत्यादिष्विवेत्यर्थः। **अन्यथेति**। बृहदारण्यश्रुतिपरिगणितस्य पुराणादेर्भगवन्निःश्वसितत्वाभावे, वेदमूलकत्वादेव प्रामाण्यस्वीकारे। पुराणादेर्भगवन्निःश्वसितत्वादेव प्रामाण्यं प्रसाधयन्तो युक्त्यन्तरमाहुः—**वेदे**ऽपीत्यादिना॥

वेदपुराणयोर्भगवन्निःश्वसितत्वेन समबलत्वे तद्विरोधे विकल्पमाहुः—**एवं च सतीत्यादिना**। यद्यपि पुराणानां नित्यत्वं वेदतुल्यं च प्रामाण्यं प्रसाधयितुं प्रवृत्ता इमे श्रीमदनिरुद्धाचार्यचरणा-

"इतिहासपुराणानि पञ्चमो वेद उच्यते" इति वाक्याच्च तेषामपि वेदत्वे सिद्धे किं वैदिकत्वेन; अत एवेतिहासपुराणादेरपि सकाशात् स्मृतीनां दौर्बल्यमङ्गीकर्तव्यम्; इतिहासपुराणयोरपि वेदत्वेन श्रुतित्वानपायात् ।

ननु "श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते, तत्र श्रौतं प्रमाणं स्यात्तयोर्द्वैधे स्मृतिर्वरा" इति व्यासस्मृतिवचनेन श्रुतिस्मृतिपुराणानां परस्परविरोधे श्रुतेरेव प्राबल्यम्, स्मृतिपुराणयोः परस्परविरोधे तु स्मृतेरेव प्राबल्यमुच्यते; इति, कथं भवता पुराणस्य स्मृतितः प्राबल्यमुच्यत इति चेत्, न; "ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं, सामवेदमथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्" इति श्रुत्या पुराणस्येतिहासस्य च वेदत्वेन स्मृतितः प्राबल्ये सिद्धे तद्विरुद्धव्यासस्मृतिबोधितायाः स्मृतितः पुराणदौर्बल्यव्यवस्थाया बाधितत्वात् । "श्रुतिस्मृतिविरोधे तु श्रुतिरेव बलीयसी" इति सिद्धान्तात् । अत एव स्मृतिभ्यः पुराणानां प्राबल्यायैव चित्तशुद्धौ सत्यां पश्चाच्छ्रीभागवते "इतिहासः पुराणश्च पञ्चमो वेद उच्यते" इत्यनेन वेदत्वमेवोक्तं श्रीवेदव्यासचरणैरपीति किम्बहुतरेण निर्लज्जमुखभञ्जनेन । एवं च सति बृहदारण्यकोक्तवेदेतिहासपुराणादिष्वपि क्वचित्प्रबलदुर्बलभावस्त्वेतदन्तर्गतवचनेनैवाङ्गीक्रियते; नत्वन्यवचनेन । "स्वयम्भूरेष भगवान्वेदो गीतस्त्वया पुरा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः" इति देवीपुराणवचनन्तु भगवद्व्यतिरिक्तपुरुषकर्तृकत्वाभावमेव बोधयति । अत एव मीमांसकानामपौरुषेयत्वेन व्यवहारो वेदे, न तु सर्वथा पुरुषकर्तृकत्वाभावम्, "ऋचः सामानि जज्ञिरे तस्मात्" इति पुरुषसूक्तविरोधात् । "बह्वीः प्रजाः पुरुषात्सम्प्रसूताः" इत्युपक्रम्य, "तस्मादृचः सामयजूꣳषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च" इति मुण्डकोपनिषद्विरोधाच्च । अत्र स्वयम्भूत्वेन कथनं तु भगवद्धर्माणां नित्यत्वेन वेदस्यापि निःश्वसितत्वेन भगवद्धर्मत्वान्नित्यत्वम् ।

---

श्रुतित्वानपायादित्यन्तेन ।

अत्र व्यासस्मृतिविरोधं परिहर्तुमाशङ्कते—**नन्विति** । परिहरन्ति—**इति चेन्नेति** । तत्र प्रमाणमाहुः—**ऋग्वेद इति** । पुराणानां वेदत्वमाहुः—**इतिहासः पुराणश्चेति** । तत्र

न च वेदस्य भगवद्धर्मत्वेन नित्यत्वे सिद्धे "छन्दांसि जज्ञिरे" इति श्रुतिविरोध इति वाच्यम्; जनीप्रादुर्भाव इति धातोर्जज्ञिर इत्यस्य प्रादुर्भाववाचकस्य सामञ्जस्यात्। न चात्र प्रादुर्भावस्तु स्थितस्यैव प्राकट्यं न तु वेदस्य चतुर्मुख-शिवादिसाधारणम्, एवं च सति कथं न कारकत्वं शिवादीनामिति वाच्यम्; स्वतन्त्रप्रादुर्भावकत्वस्य कारकत्वेन विवक्षितत्वात्, ब्रह्मादीनां तु "प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सती स्मृतिं हृदि, स्वलक्षणा प्रादुरभूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदताम्" इति श्रीभागवतीयवचनेन स्वतन्त्रप्रादुर्भावकत्वाभावात्; तस्मादपौरुषेयत्वमपि सर्वथा वेदे न सम्भवतीति दिक्।

ननु स्मृतीनां भगवन्निःश्वसितत्वाभावेन कथं तदुक्तधर्माणां प्रामाण्यमिति चेत् "य द्वै किञ्चन मनुरवदत्तद्भेषजम्" इति श्रुतेरिति गृहाण। न चैवं मनुस्मृतेरेव प्रामाण्यमायाति न त्वन्यस्मृतीनामिति वाच्यम्; "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्, आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" इति मनुस्मृतिवचनेनान्यासां स्मृतीनामपि प्रामाण्यस्याबाधितत्वात्। न च "स्मृतिशीले च तद्विदाम्" इत्यनेन मनुस्मृतेरेव ग्रहणमिति वाच्यम्, तद्विदामिति बहुवचनेनान्यर्षिप्रणीतस्मृतीनामपि ग्रहणादिति गृहाण" इत्यादिना महता प्रबन्धेन शास्त्रार्थमाहुः, तत्र यद्यप्येतद्विषयेऽन्यदप्यस्तोकमुपपादितं तथापि बहुविस्तरभिया विरम्यतेऽतस्ततोऽवधेयं विशेषजिज्ञासुभिः।

यत्तु, रङ्गरामानुजाचार्या बृहदारण्यकभाष्ये—"भाव्यरूपाण्येतानि भगवतो निःश्वसितानि, अयत्नेन तदुद्गतानीत्यर्थः। यद्यपि सूत्रस्मृतिपुराणादयो व्यासादुद्गता इति पुराणेषु प्रसिद्धिस्तथापि तेषां भगवदंशत्वाद्भगवन्निःश्वसितोक्तिरुपपद्यत इति द्रष्टव्यम्" इत्याहुः। तन्न रुचिरम्, तेषां वेदवत्पूर्वसिद्धत्वात्।

---

हरन्ति—जनीति। शिवब्रह्मणोरपि कृतित्वपरिहारायाहुः—एवं च सतीति। अपौरुषेयत्वमिति। पुरुषः पुरुषोत्तमः, तदकृतत्वमित्यर्थः।

ननु कथमेवं विभाव्यते "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः" इति वाक्यादेव व्यासकर्तृकत्वसिद्धेरिति चेत्; मैवम्, "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा कृतम्, नित्यं शब्दमयं ब्रह्म शतकोटिप्रविस्तरम्, अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः, पुराणमेकमेवासीत्तस्मिन् कल्पान्तरेऽनघ" इति मात्स्यमानात् । न चोभयोर्विरोधो विभाव्यः, तेषां तत्कर्तृकत्वोक्तौ सङ्ग्रहवत्पुराणसमासकर्तृत्वेनापाततः प्रतिपन्नापष्टुत्वपरिहारस्य सुशकत्वात्; अतो नैगमविरोधाद्वैयासविरोधाच्च न तथाद्रियतेऽस्माभिरिति दिक् ।

प्रकृतमनुसरामः; श्रवणकरणत्वं प्रकटयन्ति—कर्णैभिरिति । श्रोतव्यसाधनस्वरूपैः श्रोत्रैः शृणुयाम भगवद्वाचकपदानां भगवति शक्तितात्पर्यनिर्धारपूर्वकं श्रोतुं समर्थाः स्याम; समस्तभगवच्छास्त्रश्रवणस्य "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः, श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्", "यथायथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथा श्रवणाभिधानैः, तथातथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्" इत्यादिवेदव्यासवाक्यैः प्रत्यूहपराहतिपूर्वकपरमफलप्रापकत्वात्तद्यथानुतिष्ठामो वयं तथा भवता विधेयम् । श्रवणभक्तेः परमफल-

---

व्यासकर्तृत्वं परिहरन्ति—**नन्वित्यादिना** ।

**भगवतिशक्तितात्पर्यनिर्धारपूर्वकमिति** । श्रवणं नाम श्रावणप्रत्यक्षम् । तच्च शक्तिग्रहपूर्वकमेव । अस्मात्पदादयमर्थो बोद्धव्य इति सङ्केतः शक्तिः । किन्तु, ये केवलं लौकिकमेव शृण्वन्ति, न तेषामिन्द्रियेषु भगवदीयत्वाविर्भावः । लौकिकशब्दशृण्वतां श्रोत्रयोर्विवरत्वादिरूपेण भागवतादिषु निन्दाश्रवणात् । अतो भक्ताः सर्वत्र सर्वेभ्यः शब्देभ्यो भगवन्तमेव गृह्णन्ति । सर्वेषामपि शब्दानां भगवत्येव शक्तिरिति वैयाससिद्धान्तः । शब्दानां भगवति शक्तिर्वाक्यानां च भगवति तात्पर्यमिति तन्निर्धारपूर्वकमित्यर्थः । विस्तरस्तु मत्कृतभक्तिमार्तण्डकिरणावलीतोऽनुसन्धेयः । तत्फलं हि प्रत्यूहपराहतिपूर्वकं परमफलप्राप्तिरित्याहुः—**प्रत्यूहेति** । ननु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादिश्रुतिषु न भवदभिमतं नित्यलीलाप्राप्तिरूपं फलमभिहितम्; अपि तु ज्ञानसाधकतयैव श्रवणमभिहितम्, तत्कथमत्र

प्रापकत्वं "यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति। यो जातमस्य महतो महिब्रवत्सेदु:श्रवोभिर्युज्यं चिदभ्यसत्" इत्यादिवेदमन्त्रेऽपि परिपठ्यते। मन्त्रार्थस्तु, यः पुरुषः पूर्व्याय कारणाय वेधसे कर्त्रे नवीयसे नित्यनूतनाय सुमज्जानये सुमतिः श्रीर्जाया यस्य तस्मै विष्णवे ददाशति ददाति अर्पयत्यविशेषात्सर्वं देहेन्द्रियप्राणान्तःकरणादिजातं, जन्म, उपलक्षणमेतद्गुणकर्मणां महतो महिष्ठं श्रेष्ठं अस्य विष्णोः जातं जन्मादि ब्रवत् ब्रूयात्, सः इत उ, निपातावधारणार्थौ, प्राप्नुयादेवेति, युज्यं सायुज्यं, वर्णलोप उक्तरीत्या, चित् इदं जन्मनो विशेषणं, अभ्यसत् प्राप्नुयात्, श्रवोभिः कीर्तिभिः, यद्वा, श्रवोभिः श्रवणैः सन्निधानाज्जन्मगुणकर्मणां "द्वा सुपर्णा सयुजा सखाया" इति मन्त्रवर्णात्, युज्यं पुरुषोत्तमं चित् सदानन्दरूपमित्यर्थः। चिदित्युपलक्षणं सदानन्दयोः, तथा च "तमु स्तोतारः" इति श्रुतिविवरणे चिदित्युपलक्षणं सदानन्दयोः इति श्रीमत्प्रभुचरणैरुक्तं सिद्धान्तमुक्तावलीविवृतौ, अभि आभिमुख्येन अनुरागेण अभ्यसत्, प्राप्नुयादिति श्रुतिरहस्यप्रकाशे श्रीमद्रामकृष्णभट्टा व्याचख्युः। तत्र, श्रवणं नाम भगवद्वाचकपदानां भगवति शक्तितात्पर्यनिर्धारः। अत्रापरे वेदान्तानां ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया श्रवणम्" इत्याहुः। आनन्दगिरयस्तु सुरेश्वराचार्यकृतबृहदारण्यकीये "श्रुतिलिङ्गादिको न्यायः शब्दशक्तिविवेककृत्, आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते" इति वार्तिकोपरि श्रुत्यादिभिः शक्तितात्पर्यनिश्चायकैर्न्यायैर्ब्रह्मात्मनि वेदान्ततात्पर्यनिरूपणं श्रवणम्" इत्याहुः। धर्मराजाध्वरीन्द्रास्तु वेदान्तपरिभाषायां श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रियेति जगदुः। तन्न रुचिरम्, वेदान्तपदव्युदस्तेतिहासपुराणादिश्रवणेऽव्याप्तेः, तच्च, कर्मज्ञानोपासनं भक्तिमार्गीयाधिकारिभिरनुष्ठीयमानमनेकविधम्। यथा— त्रिवर्गकामनया कृतं कर्ममार्गीयम्, अधिकारिणः कर्ममार्गीयत्वात्, ज्ञानोदयहेतुचित्तशुद्धिहेतुत्वेनाचरितं ज्ञानवर्त्मीयम् । साक्षान्मोक्षसाधनत्वेन तत्र-

---

तदेव श्रुत्या समर्थयन्ति—यः पूर्व्यायेति। ननु ब्रह्मणि तात्पर्यावधारणरूपा मानसी क्रिया नाम श्रवणमिति प्रसिद्धलक्षणं विहाय किमिति भगवति शक्तितात्पर्यनिधार इत्युच्यत इत्या-

प्रकारेण क्रियमाणमुपासनामार्गीयम् । भक्तिमार्गीयभक्तकृतभक्तिसाम्प्रदायिकदीक्षापूर्वकमोक्षसाधनत्वेनानुष्ठितं प्रवाहवन्मुक्तिफलकत्वेनाभिमतं प्रावाहिकभक्तिमार्गीयं भवति। वेदादिविहितप्रेमात्मकभाविसाधनत्वेन कृतं मार्यादिकभक्तिमार्गीयं ज्ञेयम् । भगवदभिन्नश्रीमदाचार्यचरणकृपाकटाक्षवितीर्णभगवत्स्नेहोत्पत्यनन्तरं स्वव्यसनतः स्वतन्त्रपुरुषार्थत्वेन समाचरितं पुष्टिपदलक्षितं निर्गुणभक्तिमार्गीयं ज्ञेयम् । एवं मार्गभेदैरधिकारिभेदैश्चानेकविधं भवतीत्याकरेषु प्राञ्चैर्मया च ब्रह्मामृतभाष्ये पीयूषलहर्यां च प्रपञ्चमिति दिक् । न चात्र शङ्क्यमेकस्यैव वस्तुनो विविधफलदत्वमसम्भवदुक्तिकमिति । एकस्यैवोषधस्यानुपानभेदैर्विविधामयनिवर्तकत्ववन्मार्गभेदादधिकारिभेदाच्च सुखेनैवोपपत्तेः । तथैव च भागवतमाहात्म्ये "श्रवणस्य विभेदेन फलभेदोऽत्र संस्थितः", इति व्यासवचसा व्यवस्थापितत्वात् । अथवा "मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः । मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः" इत्यत्र यथैककालावच्छेदेनैकस्यैव परब्रह्मणस्तं तमधिकारिणं तथा तथा दर्शनम् । यथा च "यद्यद्धियात उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय" इत्यत्रैकस्यैव भगवतस्तत्तद्भाववन्तं प्रति तत्तद्वपुःप्रणयनं प्रगीयते, तथेहापि, सामञ्जस्येन न काप्यनुपपत्तिः । न च कथाया भगवत्त्वे विमतत्वं विभाव्यम्, भागवते "तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम्; श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः" इति गोपीगीते भगवत इव कथायाः षड्भिर्विशेषणैः षडैश्वर्यवत्त्वस्य स्फुटीकृतत्वात् । भागवतमाहात्म्ये च "स्वकीयं यद्भवेत्तेजस्तच्च भागवतेऽदधात्; तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम्; तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः, सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी; श्रीमद्भागवताख्योऽयं प्रत्यक्षः कृष्ण एव हि" इत्याद्युक्त्या प्रत्यक्षकृष्णत्वं कृष्णद्वैपायनेन निरूपितत्वाच्चेति चतुरस्रं सर्वम् ।

इह दर्शनश्रवणयोः श्रवणस्य प्रथमप्रार्थनप्रयोजनं परमात्मनि नैष्ठिकभक्तिजनकत्वमेव तस्य; तज्जनकत्वमपि "आचार्याद्देवाधीता विद्या साधिष्ठं प्रापयति", "आचार्यवान् पुरुषो वेद", "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ, तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इत्यादिश्रुतिततिस्तूयमानया गुरुसेवया लब्धगुरुप्रसादं प्रत्येव प्रतीयते । अत्रैषा प्रक्रिया–प्रथमं तीर्थपर्यटनं, ततो महत्सङ्गः ततस्तेषां सेवा । ननु किं महत्सङ्गेन, स्वयं पठने श्रवणकीर्तनयोः सिद्धेरिति चेत्, न, श्रवणस्यैवासिद्धेः । तदुक्तं च भागवते "सतां हि सङ्गान्मम वीर्यसम्पदो भवन्ति हृत्कर्णरसायनाः कथाः, तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति" इति कथनेन कथायाः श्रोतुर्हृद्रसायनत्वं कर्णरसायनत्वं च, भगवद्वीर्यसम्पत्सङ्गत्यैव भवति नान्यथेति निगमय्य तस्यात्यन्तमपेक्षोपक्षिप्यते; अत एव श्रीमदाचार्यचरणा अपि "सर्वानेव गुणान् विष्णोर्वर्णयन्ति विचक्षणाः, ते मृतोदाः समाख्यानास्तद्व्याख्यानं सुदुर्लभम्; महतां कृपया यद्वत्कीर्तनं सुखदं भवेत्, न तथा लौकि-

---

तच्च श्रवणमाचार्याद्देवेत्याहुः—**इहेति** । स्म **सतामिति** । तृतीयस्कन्धे पञ्चविंशाध्याये भगवद्वाक्यमिदम् । सुबोधिन्यां सतां प्रसङ्गादिति पाठः । प्रकृष्टत्वं प्रोपसर्गार्थः । तथा च न केवलं सतां सङ्ग एव, अपि प्रकृष्टः सङ्गः; सच रहस्यवर्णनात्मक एव भवितुमर्हति, तस्मादेव हेतोर्भवगद्वीर्यसम्विदः, हृत्कर्णरसायनाश्च कथा भवन्ति, तासां जोषणात् प्रीतिपूर्वकसेवनात्, प्रथमं श्रद्धा, ततो रतिः, ततश्च भक्तिः क्रमेण शीघ्रमपवर्गवर्त्मनि भवन्ति; भक्त्या वैराग्यम्, ततोऽपि निरन्तरं स्मृतिः, ततो योगप्रवृत्तिश्चेति सकलार्थः । अत एव तादृशकथाया रसायनत्वोक्तिर्बलाधायकत्वात् "नायमात्मा बलहीनेन लभ्यः" इति श्रुतेः । तादृशां सताममृतोदरूपत्वं जलभेदग्रन्थोक्तं दर्शयन्ति **अत एवेत्यादिना** । **सर्वानेवेति** । शेषव्यासाग्निमारुतजडनारदमैत्रादीनां समुद्ररूपत्वमुक्त्वा तैरुक्ताया भगवत्कथाया लोक–वेद–गुण–मिश्रत्वं च प्रतिपाद्य ततोऽप्युत्तमाविचक्षणा गुणातीततया शुद्धान् सच्चिदानन्दरूपिणः सर्वानेव गुणान् वर्णयन्ति । तथा चाहुः पण्डितपुरन्दराः श्रीपुरुषोत्तमचरणाः—स्वस्य गुणातीततया शुद्धान् लोकवेदगुणामिश्रान् सच्चिदानन्दरूपिणः सच्चिदानन्दात्मकान्, विष्णोरित्यस्य वा विशेषणम्, तथा च सच्चिदानन्दरूपिणो वा विष्णोः, तादृशान् शुद्धान् सर्वान् गुणान् स्वयं गुणातीततया विचक्षणाः सर्वज्ञातारः सन्तो ये वर्णयन्ति, ते अमृतोदाः

**कानां हि स्निग्धभोजनरुक्षवत्" इति प्राहुः । ततः कलावस्मिन् यागादीनां देशादिषट्शुद्ध्यधीनप्रतिपत्तिकत्वेन "को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः; शुद्धिकामो न शृणुयाद्यशः कलिमलापहम्" इति सात्त्वतसंहितासमुदितामनोमुकुरनिर्मलीकरणाय श्रीमद्यदुकुलालङ्कारस्य गोपीपतेः श्रीकृष्णस्य कथाश्रवणम्; ततः कथायां रुचिरुत्पद्यते, ततः कथायां गुरौ च श्रद्धा, तत एतादृशधर्मेण स्वरूपोपकारेणाव्यभिचारिणी शुश्रूषा समुद्भवति। अत्र पूर्वपूर्वसाधनानां दृढत्वान्नेतरेषां निवृत्तिः । तादृशशुश्रूषया सततं "प्रविष्टः कर्ण-**

---

शुद्धोदा इत्यनुक्त्वा यदमृतोदा इत्युक्तं तेन श्वेतद्वीपादिपरिखाभूतावरणाख्यौ "अरश्च ह वैण्यश्चार्णवौ ब्रह्मलोके" इति श्रुत्युक्तौ "अरनामामृताम्भोधिण्यनामामृतसागरः" इति वाराहपुराणोपबृंहितौ समुद्रावपि सङ्गृहीतौ ज्ञेयाविति । एवं च यागादीनां सत्यपि शुद्धिहेतुत्वे भगवत्कथायास्ततोप्याधिक्येन शुद्धिहेतुत्वं प्रतिपादयितुमाहुः—**कलावस्मिन्निति** । **को वेति** । वेत्यनादरे । तेन ये हि भगवत्कथां न शृण्वन्ति तेऽशुद्धा एव तिष्ठन्ति आसुरावेशवत्तयेति भावः । कलौ सर्वेषामपहतपाप्मत्वाभावात्साधनान्तरैर्न कलिदोषनिवृत्तिः । भगवतस्तु कालादपि परत्वात्तद्यशसोऽपि तत्परत्वम् । अतः कलिदोषनिवर्तकत्वं तस्यापि । **ततः कथायामिति** । पुरोदीरित तृतीयस्कन्धोक्तस्य सताम्प्रसङ्गादिति वाक्यस्य स्वास्स्यं तत्र प्रदर्शितश्च क्रमोऽयम् । **प्रविष्टेति** । द्वितीयस्याष्टमे राजवाक्यमिदम् । कीर्तनेऽपि श्रवस्य विद्यमानत्वात् मुखस्य गुणनिर्गमनहेतुत्वात्कर्णरन्ध्रेणेत्युक्तम् । रन्ध्रशब्दः प्रवेशहेत्वर्थः । एकवचनमतिसावधानश्रवणार्थम् । यतो लोके सावधानश्रवणे एकैव कर्णशष्कुली व्याप्रियते तदेन्द्रियमेकमुखमेव भवति । स्वानामिति कृतात्मनिवेदिनाम् । न केवलं हृदयमात्रे प्रविशति, किन्तु भावसरोरुहे । भावो रतिरिति केचित् । धातुसामान्यार्थः सत्तारूपो भगवानित्यपरे । कारणरूपस्त्वविनाशीभावः । स निरन्तरश्रवणेन हृदयरूपो जात इति । स चेत्पुनर्भक्त्या विकाशं प्राप्तः सरोवररूपो भवति । साधनरूपभक्तिः श्रवणसम्पुटिता यदि तस्मिन् बीजमापद्यते । प्रेम्णा च हृदयं पूरितमेव तिष्ठति तदा बीजवृद्धौ श्रवणादिना कमलं भवति । तदेव हि भगवदासनं गृहं च भवतः । तदा तत्र प्रविष्टो भगवान् शमलं सर्वमेव धुनोति । यद्यपि पापक्षयः सर्वोऽपि पूर्वमेव जातस्तथापि शमलं तिष्ठति । शं अलं यस्मादिति शमलम् । ऐहिकामुष्मिकफलानि शंशब्देनोच्यन्ते शमादयश्च । केवलपुण्येन च भोगाभावात्तत्र

**रन्ध्रेण स्वानां भावसरोरुहम्, धुनोति शमलं कृष्णः सलिलस्य यथा शरत्" इति भागवतवाक्यात्स्वकथाः शृण्वतां सतां सात्त्वतां हृदि विराजमानो ह्यभद्राणि विधुनोति पुण्यश्रवणकीर्तनः श्रीकृष्णः । ततो नष्टप्रायाया "उच्छिष्टलेपाद्यनुमोदितो द्विजैः सकृत्स्वभुञ्जैस्तदपास्तकिल्बिषः, एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिर्व्यजायत" इति भागवतोक्तप्रकारेणोच्छिष्टलेपाद्यनुमोदिताः सततं भागवतं गुरुं परिचरन्तो "तत्रान्वहं कृष्णकथाः प्रगायतामनुग्रहेणाशृणवं मनोरमाः; ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाभवद्रुचिः ।" "नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया, भगवत्युत्तम-**

---

रूपो न ज्ञानादिसाधनमपेक्षत इत्यर्थः । अत्र दृष्टान्तेन स्पष्टयति—**सलिलस्य यथा शरदि**ति । सरःशब्देन यत्सलिलं तदत्रोच्यते । यथा शरदित्येव दृष्टान्तः । यथा लौकिकं जलं शरदा निर्मलं क्रियते न तु वर्षासु कथमपि निर्मलं भवति । तथा प्रेमरूपं यज्जलं तदपि भगवता निर्मलं भवतीत्यर्थः, इत्याहुः सुबोधिन्यां भगवत्पूज्यपादाः श्रीमद्वल्लभाचार्यचरणाः । सतां परिचरणफलमाहुः—**उच्छिष्टे**ति । **तत्रान्वह**मिति । नारदवाक्यमिदम् । अन्वहमित्यशृणवमित्यनेन सम्बध्यते । परमहंसानां वा नित्योऽयं धर्म इति ख्यापयितुम् । कृष्णपदात्परमहंसा अप्येते भक्ता इति ज्ञापितम् । गानं प्रेमाधिक्यात् । प्रकृष्टगानं तद्भावेन । अनुग्रहेणेत्याज्ञया श्रवणं बोध्यते । न तु प्रासङ्गिकम् । कथामनोरमपदाभ्यां अर्थमभिप्रायं ते बोधयन्तीति लक्ष्यते । निर्बन्धेन श्रवणाभावायाह—**मनोरमा** इति । मनसो रमणे यासु । एवमेका श्रवणभक्तिः सिद्धा । तस्या नारदत्वपर्यन्तं फलम् । ततः कीर्तनमिति साम्प्रतं कीर्तनम् । एवमग्रे श्रवणादिवृद्धौ तावद्भिः कल्पैर्नवविधसाधनभक्तौ सिद्धायां प्रेम्णा भगवत्सायुज्यं भवतीति शास्त्रार्थः । तत्र श्रवणफलमाह—**ताः श्रद्धये**ति । श्रवणादीनां नादृष्टद्वारा फलसाधकत्वम् । किन्तु, स्वरूपेणैव । फलं च भगवद्याथार्थ्यज्ञानम् । तदैव हि कीर्तनेऽधिकारः । उत्तरस्यादिना हि पूर्वस्यावसानम् । अतः श्रवणस्य नैरन्तर्यं कर्तव्यम् । ततो भगवति रुचिः । परं श्रवणद्वारा । तदाह—**प्रियश्रवसी**ति । प्रियं श्रवः श्रवणं कीर्तिर्वा यस्य । अङ्गेति कोमलामन्त्रणमप्रतारणाय । प्रमाणबलं परित्यज्येन्द्रियाणां स्वाभाविकविषयग्रहणं रुचिरिति श्रीमदाचार्यचरणाः प्राहुः—**नष्टप्रायेष्वि**ति । धुता एव कामादयो न नाशिता इति कचित्कचित्तेषां सत्त्वं प्रतीयते । श्रवणे

श्लोके भक्तिर्भवति नैष्ठिकी" इत्यादिव्यासवचनव्यक्तां महति बाधकेऽप्यचलत्वलक्षणामुत्तमश्लोकस्य भगवतो नैष्ठिकीं भक्तिं प्राप्नुवन्ति । न च तान् बाधितुं कालादयः प्रभवन्ति । ततो भगवति समाविष्टे चेतसि विनष्टरजस्तमस्कं कामलोभादिभिरनाविद्धं तद्भगवदासनयोग्यं सत्त्वे प्रसीदति । प्रसन्नमनसो "विषयाविष्टचित्तानां विष्ण्वावेशस्तु दूरतः", इति न्यायेन मुक्तसङ्गस्य भगवद्भक्तियोगतः "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः", इति गीतागीतगोविन्दवचसां भगवत्तत्त्वविज्ञानं जायते । ततो भगवत्स्वरूपविज्ञानानन्तरं भगवद्दर्शनम् । दर्शनेन च "यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति" इति श्रुत्या सर्ववस्तूनां याथार्थ्यज्ञानेन "भिद्यते हृदयग्र-

---

एवं कथायां क्रियमाणायां भगवति प्ररमप्रेमोत्पद्यत इत्याह—**भगवतीति**, अत्र सर्वत्र भगवच्छब्देन शुद्धं परं ब्रह्मोच्यते । उत्तमश्लोक इति । उत्तमैः श्लोक्यत इति, उत्तमा वा श्लोका यस्येति । सद्भिः कथया च सहिते भक्तिर्भवतीत्यर्थः । ततश्च जातायामपि भक्तौ सन्तः कथाश्च न त्यज्यन्त इति भावः । महताऽपि बाधकेनाचलनं निष्ठा । निष्ठां प्राप्ता नैष्ठिकी । तदा हि कालाद्युपद्रवा न स्फुरिष्यन्तीत्यर्थ इति सुबोधिनी । **भक्त्येति** । गीतायामष्टादशाध्याये । स मदीयया भक्त्या निर्गुणया निर्गुणविषयकत्वात्परया मामेकं निर्गुणं पुरुषोत्तममभिजानाति तत्त्वतो यावान् यश्चास्मीति । यादृशैश्वर्याद्यनन्तालौकिकविशिष्टो यादृशलीलापरिकरसहितः प्राकृतगुणसृष्टिरहितो ब्रह्म परमात्मा भगवानिति भेदेन ततो नामविस्तृतोऽस्मि यथा तथा मामभिजानाति । एवमभिज्ञानमुक्तं भागवतचतुःश्लोक्यां "यावानहं यथाभावो यद्रूपगुणकर्मकः" इत्यादि । तदनन्तरं तत्त्वतो मां पुरुषोत्तमं ज्ञात्वेत्यनुवादः । तत्त्वतो वा पुरुषोत्तमं मां विशते । प्रवेश एव फलं "निर्गुणा मुक्तिरस्माद्धि सगुणा सान्यसेवया" इति निबन्धे, "अलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वा वैकुण्ठादिषु" इति सेवाफले च निरूपितम् । अथवाऽऽविशते पुरुषोत्तमाविष्टो भवति । अत एवोक्तमाचार्यैः सुबोधिन्यां "शुको भावनया गोकुले स्थित्वाह य एतदिति, स भगवानिति च" । तेन ब्रह्मभूतोऽपि शुकः श्रीपुरुषोत्तमभक्तितत्त्वज्ञानतः श्रीपुरुषोत्तमाविष्ट एव तल्लीलामध्यपातीत्यवसीयते । तदनन्तरं तेन नान्तरं भेदो यथा भवति तथेति वा । तथाच श्रुतिः—"ब्रह्मविदाप्नोति परम्" "तदक्षरे परमे व्योमन्" "यो वेद निहितं गुहायाम्" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । एतेनाक्षरमार्गात् भगवन्मार्गे वैलक्षण्यं यत्र तत्र भगवानेव प्रमाणं प्रमेयं च दर्शितम् । **यस्मिन्निति** । **सर्वमिदं विदित**मिति । एतदा-

न्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति श्रुतिविश्रुतप्रकारेण चिदचिद्ग्रन्थिरूपस्याविद्याकार्यरूपस्य समूलोन्मूलनमिति साधनश्रवणप्रक्रिया । श्रीमदाचार्यचरणाश्चेमां प्रथमस्य द्वितीये पञ्चमे च स्वव्याख्यायां व्याचख्युः ।

प्रकृतमनुसरामः । कीदृशा यूयमित्यपेक्षायामाहुः—देवा इति । सुरसर्गसमुद्भूताः । "देवो भूत्वा देवं यजेत्" इति न्यायेन सेवायामधिदैवत्वव्यक्त्यै तस्य परमोपयोगित्वात् । देवत्वं चात्र दीव्यते प्रकाशते गीतोक्तषड्विंशतिसम्पत्तिभिरिति व्युत्पत्त्या दैवसम्पत्सम्पन्नत्वम्; सम्पत्तयस्तु "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः, दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्, अहिंसा सत्यमक्रोधस्त्यागः क्षान्तिरपैशुनम्, दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्, तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता, भवन्ति सम्पदं दैवमभिजातस्य भारत" इति भगवतोपवर्णिता षोडशध्याये । तत्र, अभयं नाम स्वोच्छेदेनाबुद्धभावः; सत्त्वसंशुद्धिश्चित्तनैर्मल्यम्; ज्ञानम् "एतावानस्य महिमा अतो ज्यायांश्च पूरुषः" इति पुरुषसूक्तोक्तप्रकारकं भगवन्माहात्म्यज्ञानम्, योगो ज्ञातेऽर्थे चित्तप्रणिधानम्, तयोर्विशेषेणावस्थितिर्निष्ठा, महति बाधकेऽप्यचलनमिति यावत्; श्रौतस्मार्तादिः; स्वाध्यायो वेदाध्ययनम्; तपो "देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्; ब्रह्म-

---

मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौ कर्मबीजं प्ररोहति, न तु तत्त्वज्ञाननिदाघनिष्पीतसलिलतयोषरायामिति कर्माण्यपि क्षीयन्ते । एतत्सर्वं न येन केन प्रकारेण जातज्ञानकार्यं, किन्तु, ब्रह्मात्मैक्यानुभवकार्यमित्याह—दृष्ट एवेति । आत्मत्वेन भगवदनुभवे । नान्यथेत्येवकारार्थः । आत्मनो ह्यनीश्वरत्वेन जाताः पदार्था ईश्वरत्वेन निवर्तन्ते । अन्यस्येश्वरत्वे ज्ञातेऽपि न ह्यन्यस्येश्वरत्वाज्ञानं स्वस्य संसारहेतुर्भवति । **इमां** प्रक्रियाम् । **प्रथमस्य द्वितीये पञ्चमे चेति** । भागवते प्रथमस्कन्धे द्वितीयाध्याये व्यासवाक्येष्वित्यर्थः । पञ्चमाध्याये नारदवाक्येषु च ।

**सुरसर्गसमुद्भूता** इति । **देवो भूत्वेति** । अन्यत्र भूतशुद्धिपूर्वकं मन्त्र–चक्रादिन्यासजालेन देवत्वं सम्पाद्य, केवलानुग्रहमार्गे तु ब्रह्मसम्बन्धोत्तरं श्रीयमुनादिद्वारेति विशेषः ।

चर्यमहिंसा च शारीरं तप उच्यते; अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च तत्, स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते; मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः; भावसंशुद्धिरित्येत्तपो मानसमुच्यते" इति गीतालक्षितलक्षिणं कायिकादिभेदात्त्रिविधम्; आर्जवमृजुत्वं सर्वदा; अहिंसा परपीडाराहित्यम्; सत्यं स्वार्थपरार्थलोभादिराहित्येन यथार्थभाषणम्; अक्रोधो निष्कारणताडनादिनाऽपि क्षोभरहितत्वम्; त्यागोऽनासक्तिः प्रापञ्चिकविषयेषु; शान्तिश्चित्तस्थैर्यम्; अपैशुनम् "एतदात्म्यमिदं सर्वम्" इतिश्रुतिविश्रुतसर्वत्रभगवदात्ममत्या परापवादराहित्यम्; भूतेषु दया सकलप्राणिषु न्युचरणश्रुत्या भगवद्विप्रयुक्तत्वेन भगवत्स्मरणोपदेशादिरूपा दया; अलोलुप्त्वं लौकिकभोगेच्छया मनोधावनत्वाभावः; मार्दवं मृदुत्वं परदुःखाभिज्ञत्वम्; ह्री लज्जा शास्त्रनिषिद्धाचरणे, तथाचाहुः श्रीमदाचार्यचरणानिबन्धे "धर्ममार्गं परित्यज्य छलेनाधर्मवर्तिनः, पतन्ति नरके घोरे पाषण्डमतवर्तनात्" इति । अचापलम् भगवत्क्रियासक्तया प्राकृतविषयेषु शैघ्र्याभावः, तेजो भगवत्कृपा प्रागल्भ्येनाधृष्यत्वम्; क्षमाविद्यमानेऽपि सामर्थ्ये परिभवादिषु क्रोधानुत्पत्तिः, धृतिः लौकिकालौकिकदुःखादिषु चित्तस्थैर्यम्; शौचं शुद्धिः सा हि बाह्याभ्यन्तरभेदेन द्विविधा; तत्र बाह्या मृज्जलाभ्यामान्तरी "यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः; तथा तथा पश्यति वस्तुसूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्"; "प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्, धुनोति शमलं कृष्णः सलिलस्य यथा शरत्" इति भागवतोदीरितप्रकारेण भगवत्कथाश्रवणादिना, तस्या आवश्यकत्वं तु "शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः, शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः, शौचं च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा, मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्ध्या तथान्तरम्, अशौचं तु परं बाह्यं तस्मादाभ्यन्तरं परम्, उभयेन शुचिर्यस्तु स शुचिर्नेतरः शुचिः" इति सन्दर्भेण स्मृतं दक्षस्मृतौ, तथैव गौतमीयतन्त्रेऽष्टमाध्याये— "अथ द्वादशधा शुद्धिर्वैष्णवानामिहोच्यते, गृहोपसर्पणं चैव तथानुगमनं हरेः, भक्त्या प्रदक्षिणे चैव पादयोः शोधनं पुनः, पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः, करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते, तन्नामकीर्तनं चैव गुणा-

भद्रं पश्येमाक्षिभिर्यजत्राः ।

दकस्य निर्माल्यमालाया अभिधारणम्, उच्यते शिरसः शुद्धिः प्रणतस्य हरौ पुनः, आघ्राणं गन्धपुष्पादेर्निर्माल्यस्य तपोधन, विशुद्धिः स्यादलं तस्य घ्राणस्यापि विधीयते । पत्रपुष्पादिकं यच्च कृष्णपादयुगार्पितम् । तदेकं पावनं लोके तद्धि सर्वं विशोधयेत् ॥'' इत्यादिवाक्यैर्द्वादशधा शुद्धिर्विधीयते ॥ अद्रोहः–परानिष्टचिन्तनरहितत्वम्, अतिमानिता–''आढ्योभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया'' इत्यादिगीतोपनिषदुक्तप्रकारक आसुरसम्पत्सम्विलीनमात्मनि सर्वाधिक्यं यज्ज्ञानं तद्भावः । एवमेताः षड्विंशतिसम्पत्तयस्तद्विशिष्टा देवाः । न चात्र तथार्थग्रहणे प्रमाणाऽभाव इति मन्तव्यम्–बृहदारण्यके ''द्वयाह प्राजापत्या देवाश्चैवासुराश्च'' इत्यत्र दैवसम्पद्विशिष्टानामेव देवपदवाच्यत्वेन व्यक्तत्वात् ॥

द्वितीयमाशास्यं प्रकटयन्ति भद्रमिति । समस्तकल्याणगुणगणैकनिलयं सदैकरसस्वरूपमानन्दमात्रकरपादमुखोदरादिविग्रहं ब्रह्मनयनपरावृत्तिपूर्वकमनिमेषलोचनैर्दृग्विषयं कर्तुं समर्था भवाम यथा तथा विधेयम् । भक्तानां तु ''अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेशयतोर्वयस्यैः, वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम्'' ''जड उदीक्षतां पक्ष्मकृद्दृशाम्'' ''अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः, प्रियं प्रियेव व्युषितं विषण्णा मनोरविन्दाक्ष दिदृक्षते त्वाम्'' इत्यादिसात्त्वतसंहितासूक्तिभिर्भगवतो भक्तवत्सलस्य श्रीमन्मन्मथमोहनस्य ''तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शने'' इति वाक्यविश्रुतप्रकारेणासेचनकया दृशा श्रीमुखदर्शनमेव चक्षुषोः परमं फलम् । अन्यथा चक्षुष्ट्वमेव नश्येत, ''बर्हायिते ते नयने नराणाम्'' इति श्रीबादरायणानुशासनात् । तदेतद्यथा तथा ''श्रुत्वा गुणान् भुवनसुन्दर श्रृण्वतां ते निर्विश्य कर्णविवरैर्हरतोङ्गतापम्, रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताविशति चितमपत्रपं मे'' इति तुरीयप्रस्थानीयश्रीमद्रुक्मिणीवाक्ये ''षड्गुणा भगवांश्च, एते चेत्प्रार्थ्यन्ते

वा तदा सर्वनाश इति विनिश्चित्य, इन्द्रियाणां त्वत्परत्वे मनोऽपि त्वत्परं जातमिति शरीरमपि त्वत्परं कर्तव्यमिति प्रघट्टकार्थः । क्रमेण गुणा निरूप्यन्ते भगवदैश्वर्यं चैतदिति सूचितम्, गुणद्वारा स्वतोऽपि चित्तवशीकरणमैश्वर्यादप्यैश्वर्यं भगवदीयानां कान्तिगुणस्वरूपाणां माहात्म्यं निरूप्यते, हे भुवनसुन्दर, भुवनेष्वेक एव सुन्दरः, अनेन कान्त्याधिक्येन स्त्रीणां स्वतश्चित्तवृत्तिरुक्ता, ते गुणान् शृण्वतां कर्णविवरैरन्तर्निर्विश्याङ्गतापं हरतां सतां रूपं च दृशिमतामखिलार्थलाभं यतः, अतस्त्वयि मे चित्तमाविशति, बहिरिन्द्रियद्वयमेव नियामकम्, अन्तरिन्द्रियस्य, श्रोत्रं चक्षुश्च श्रुतावपि "अक्षण्वन्तः कर्णवन्तः" इत्यत्र तथैव निरूपितम्, उभयेषामुपकारं त्वद्गुणास्त्वद्रूपं च करोति; तत्रैकमान्तरं तापं हरति, एकं च बहिः सर्वपुरुषार्थान्प्रयच्छति, श्रवणमात्रेऽपि क्रियमाणे प्रयत्नं विनापि त्वद्गुणाः स्वत एवान्तर्निविष्टाः तेषामपि निवेशने प्रतिबन्धाभावायाह—कर्णविवरैरिति । अपावृतानि कर्णरन्ध्राणि लक्ष्यन्ते; अन्यथा न प्रविशन्तीत्येतावत् पुरुषकर्तव्यमुपदिष्टम्; अतः कर्णविवरैः पातालविवरवत्प्रसिद्धैरन्तर्निविश्याङ्गानां तापं हरन्ति गुणाः, अङ्गेति सम्बोधनं वाऽऽत्मत्वेन, रूपं च ये दृशिमन्तो दर्शनयुक्ता येषां चक्षुःकार्यमस्ति, रूपभेदविद इति प्रथमा कक्षा, सर्वात्मना दृश्यगुणपरिज्ञानमन्तिमा; तेषां दृशां चक्षुषामखिलार्थानां लाभो यस्मात्, चतुर्विधपुरुषार्थाश्चक्षुषा सिद्ध्यन्ति; चक्षुषः सूर्यभावो मोक्षः; रूपज्ञानं कामः, रूपग्रहणमर्थः, तत्रावगाहनं धर्म इति । फलवतामेषां फलान्यप्यूह्यानि, तत्रापि पुरुषार्था न सम्पादनीयाः, किन्त्वेकस्मादुपलब्धा निधय इव प्राप्यन्ते । यत्रैवमिन्द्रियाणामुपकारं तद्धर्माः कुर्वन्ति तत्र चित्तमपि ममापि तथा भविष्यतीति त्वयि निर्विशति । चित्तस्य हि द्वयं प्रतिबन्धकम्, लोको वेदश्च, तत्र लोकमतिक्रम्य प्रवर्तत इत्याह—अपत्रपमिति । अपगता त्रपा यस्मात् "लज्जा हि लोके नियामिका" इत्यादिना श्रीमदाचार्यचरणाः सुबोधिन्यां बोधयाञ्चक्रुः । नन्वेवं प्रार्थने को हेतुरित्याकाङ्क्षायां हेतुं निर्दिशन्ति—यजत्रा इति । यतो भगवत्पूजनमेव निसर्गसिद्धः स्वभावोऽस्माकं तच्चादर्शन असम्भव्यत्यतस्तथा

## स्थिरैरङ्गैस्तुष्टुवांऽस—

एतावन्तं नर्यया विवासात्" इत्यादि मन्त्रैर्वेदेऽपि परिपठ्यते । अस्यार्थस्तु-योमर्तः मर्त्यः गुरुगायाय बहुभिः कीर्त्यमानाय विष्णवे पुरुषोत्तमाय दाशत् दद्यात् सर्वं समर्पयेत् सः सत्राचा समीचीनेन मनसा भगवति निश्चलेन प्रयजते भगवन्तं सेवत इत्यर्थः । यजधातोः पूजार्थकत्वेऽपि प्रकृष्टार्थ प्रोपसर्ग-विशिष्टत्वेन सेवारूप एवात्र यजतेरर्थः, सनिष्यन् फलमिच्छन्, नु क्षिप्रं दयते प्राप्नोतीत्यर्थः, यत एतावन्तं महन्तं नर्यं नरेषु हितं विष्णुं अविवासात् परिचरेदित्यर्थः" इति श्रीमद्रामकृष्णभट्टाः श्रुतिरहस्यप्रकाशे प्रकटीचक्रुः ।

एवं स्वस्य सेवकत्वमाविर्भाव्य स्तोतृत्वं प्रकटयन्ति-स्थिरैरङ्गैस्तुष्टुवांस इति, स्थिरैर्विषयाविष्टैः केवलं भगवति निरुद्धैरङ्गैः "अङ्गं प्रतीकोऽवयवः" इति कोशादवयवैरिन्द्रियादिभिः । एतेन देहेन्द्रियादीनां शुद्धत्वमुक्तम् । तादृशैः करणैस्तुष्टुवांसः बलस्तोतारो वयं भक्ता उक्ताः । तुष्टुवांस इति वर्तमानप्रयोगेण स्तुतिविषयिण्या भगवतः सर्वलीलायास्तन्मध्यपातिनामङ्गानां च नित्यत्वं सूच्यते । वेदेऽपि "ध्रुवासो अस्य कीरयः" इत्यादिमन्त्रैस्तथैव स्फुटं निरूप्यते एतेन कीर्तनभक्तिरपि प्रतिपादिता । तथाहि वेदे "प्रतत्ते अद्य शिपिविष्ट नामार्य शंसामि वयुनानि विद्वान् तं त्वा गृणामिव समतव्यान्यस्य रजसः पराके" इत्यादिमन्त्रैर्गीयते । अस्यार्थस्तु हे शिपिविष्ट शरीरान्तर्यामिन् तत् ते एव नाम अभेदेनेदानीं प्रशंसामि कीर्तयामि । आर्य श्रेष्ठ त्वम् सत्य अनन्त गुणान्वितत्वात् "सत्यादिगुणसाहस्रैर्युक्त"-मिति तत्त्वदीपे श्रीमदाचार्यचरणाः वयुनानि ज्ञातव्यानि विद्वानिति नामोच्चारणे शान्त्यादिगुणसम्पन्नस्य ज्ञातव्यं नावशिष्यते । त्वा गृह्णामीति गुणसङ्कीर्तनं करोमि । तव संमहान्तम्, अतव्यान्, अल्पोऽहम्, अस्य रजसः पराके परपाके क्षयन्तं निवसन्तमिति श्रीरामकृष्णभट्टाः श्रुतिरहस्यप्रकाशे व्याचख्युः । अथवा स्थिरैरङ्गैरित्यस्योभयत्रान्वयः । तथा सति "स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युत सत्कथोदये । मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्ग-

स्तनूभिर्व्यशेम देवहितं यदायुः ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथ पुरुषो ह वै नारायणोऽकामयत,

क्योक्तपद्धत्या भगवति निरुद्धदेहेन्द्रियप्राणान्तःकरणात्मभिः सेवनं ज्ञेयम् । तथैव स्तुतिरपि । तेनैतादृशभक्तैरभिलषितं श्रवणे दर्शनस्य फलरूपमेवेति गम्यते । एवं स्वाशास्ये प्रकटय्य स्वाधिकारसम्पत्तिसूचकं मध्ये हेतुद्वय-मुक्त्वा तृतीयमाशास्यं प्रकटयन्ति—तनूभिरिति । अप्राकृतदेहैः "देहेन्द्रियासु-हीनानां वैकुण्ठपुरवासिना"मित्यादिपाराशर्यप्रसिद्धसूक्तिसमुद्राविततैरलौकिकै-रिति यावत् । देवहितं देवेन दशविधलीलाविशिष्टेन पुरुषोत्तमेन शास्त्रे "तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः । नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः" इत्यादिवचोभिरुपदिष्टं भगवत्सेवौपयिकमायुर्जीवितं व्यशेम विशेषेण अशेम व्याप्नुयाम इत्यर्थः । अत्र शङ्कराचार्याः—नृसिंहपूर्वतापिनि भाष्ये—"व्यशेम वीतरोगं विविधैहिकामुष्मिकसुखभोगे क्षमं व्यशेम प्राप्नुयाम" इत्याहुस्तन्न, स्थिरदेहेन्द्रियान्तःकरणात्मनां देवानामैहिकामुष्मिकसुखाकाङ्क्षा-विरहात् । तत्सत्त्वे च देहेन्द्रियान्तःकरणात्मनां स्थिरत्वस्य देवत्वस्य चास-म्भवः । इष्टापत्तिश्चेद्वदतो व्याघातः श्रुतिविरोधश्चेत्यलं प्रयासेन । आशास्यं सर्वं निवेद्य शान्तिं प्रार्थयन्ते—ॐशान्तिरिति । ओङ्कारपदवाच्यं परब्रह्म श्रीकृष्णः प्रत्यूहपरम्परां विनाश्य शान्तिं कुर्यादिति । त्रिरावृत्तिः त्रिविधनिवृत्तिप्रयो-जनिका ज्ञेया । इति शम् ॥ इति शान्तिव्याख्यानम् ॥

( नारायणो मूलपुरुषः )

एवं शान्तिमुक्त्वोपनिषदं विवक्षुर्निगम उपनिषदुक्तं ब्रह्मस्वरूपं प्रथम-माह—ॐमिति । "ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः;" इति

---

देवेनेति । देवहितमित्येकं पदम् । केचन हे देव हितं यदायुरिति व्याचख्युस्तन्न शोभ-नम् । पदपाठविरोधेन पदच्छेदे मानाभावात् । चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरिति पाणिनीयानुशासनाच्चतुर्थीसमासः । देवेभ्यो दैवसम्पद्विशिष्टेभ्यो हितमुपकारकमिति तदर्थः ।

**गीतावाक्योपदिष्टत्रिप्रकारकनिर्देशात्मकः परब्रह्मस्वरूपः "एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्" इत्यादिमाण्डूक्यश्रुत्या सर्वकारणत्वेन तस्य निरूपणात्। निराकारमेव परं ब्रह्मेति मतं**

---

सर्वम्" "ॐमित्यात्मानं युञ्जीत" इत्यादिश्रुतिप्रतिपाद्यं ब्रह्म। तस्यैव त्रिविधो निर्देशो गीतास्मृतिराहेत्यर्थः। परब्रह्मरूप ओङ्कार एव सर्वकारणमिति श्रुत्या प्रदर्शयन्ति—**एष सर्वेश्वर** इति। एष ॐकारः सर्वेश्वरो वस्तुजातस्य स्वरूपावस्थत्वादीश्वरः। सर्वेषां भेदानां ज्ञाता सर्वज्ञः। अन्तर्यामी, अन्तरनुप्रविश्य नियामकः। योनिरुत्पत्त्यधिकरणम्। प्रभवाप्ययावुत्पत्तिप्रलयौ। अत एव छान्दोग्यपरिशिष्टेऽप्युक्तम् "ॐकारपूर्वं हि योगोपासनं यानि नित्यानि पुण्यतमानि कर्माणि दानयज्ञतपःस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदैव्यपैत्र्यमन्त्रोच्चारब्रह्मारम्भादीनि यच्चान्यत्किञ्चिच्छ्रेयस्तत्सर्वं प्रणवमुच्चार्य प्रवर्तयेत्समापयेच्च। स्वरितोदात्त एकाक्षर ॐकार ऋग्वेदे। सर्वोदात्त एकाक्षर ॐकारो यजुर्वेदे। दीर्घोदात्त एकाक्षर ॐकारः साम्नि। सङ्क्षिप्तोदात्त एकाक्षर ॐकार अथर्वणे" इत्यादिना। बौधायनोऽपि "अपि वा प्रणवमेव त्रिरन्तर्जले पठन्सर्वात्पापात्प्रमुच्यते सर्वात्पापात्पूतो भवति" इत्याह। योगसूत्रेऽपि–"तस्य वाचकः प्रणवः" (१।२७) "अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः। तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति" इति याज्ञवल्क्यवचनमपि। तत्फलमपि "तमेतमात्मानमोमिति" "प्रपञ्चोपशमः शिवोऽद्वैत ॐकार आत्मैव" इति च श्रुतेः। अन्यत्रापि "माङ्गल्यं पावनं धर्म्यं सर्वकामप्रसाधनम्। ॐकारं परमं ब्रह्म सर्वमन्त्रेषु नायकम्। यथा पर्णं पलाशस्य शङ्कुनैकेन धार्यते। सिद्धानां चैव सर्वेषां वेदवेदान्तयोस्तथा। अन्येषामपि शास्त्राणां निष्ठार्थोङ्कार उच्यते। आद्यं मन्त्राक्षरं ब्रह्म त्रयी यस्मिन्प्रतिष्ठिता। सर्वमन्त्रप्रयोगेषु ॐमित्यादौ प्रयुज्यते। तेन सम्परिपूर्णानि यथोक्तानि भवन्ति हि। सर्वमन्त्राधियज्ञेन ॐकारेण न संशयः। तत्तदोङ्कारयुक्तेन मन्त्रेण सफलं भवेत्" इत्याह भगवान् याज्ञवल्क्यः। निरुक्तमाण्डूक्यश्रुतेस्तस्य सर्वकारणत्वरूपं ब्रह्मत्वं निरूपितमित्यर्थः। मायावादमतं निरसितुमाहुः—**निराकारेत्यादिना**। तन्मते "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "साक्षी चेता केवलो निर्गुणश्च" "अस्थूलमनणु" "सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्" "अरूपवदेव हि तत्प्रधानत्वात्" "प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः" इत्यादिभिः श्रुतिस्मृतिन्यायैर्निराकारत्वं साध्यते। तन्मन्दम्। लौकिकक्रियाकलासत्त्वादिगुणजन्यशरीरविकारीन्द्रियजडधर्मनिषेधपरत्वेन तदभिप्रायात्।

**निरसितुं तस्य साकारत्वमाह—पुरुष इति । सर्वान्पाप्मन औषत्तस्मात्पुरुषः" इतिपुरुषविधब्राह्मणनिरूपितः पुरुषाकारः, "सहस्रशीर्षा पुरुषः सहस्राक्षः**

---

वासः साक्षी चेता केवलो निर्गुणश्च" इत्यादिभिर्गुणानाम्, "उतामृतत्वस्येशानः" इत्युक्त्वा सर्वतःपाणिपादादिकथनेनाजन्यशरीरस्याविकारीन्द्रियाणाम्, "अणोरणीयान्महतो महीयान्" इत्यादौ अणुत्वादिधर्माणां चोक्तत्वात् । न चैतेषां सोपाधिकपरत्वं वाच्यम्, तत्पक्षस्य श्रीमदाचार्यचरणैः पण्डितपुरन्दरश्रीपुरुषोत्तमपादैश्च खण्डितत्वात् । एतद्भाष्यकारैरप्यग्रे दूष्यमाणत्वाच्च । "सर्वेन्द्रियगुणाभासम्" इत्यत्र सर्वेन्द्रियगुणा इव आभास इत्युपमानसमासेन ब्रह्मण एव सर्वरूपत्वम् । तेन "प्राणन्नेव प्राणो भवति वदन्वागिति" इतीन्द्रियकार्याणां ब्रह्मकार्यत्वश्रावणेन "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः ते निचिक्युर्ब्रह्म पुराणमग्र्यं मनसैवाप्तव्यं नेह नानास्ति किञ्चन" इत्यत्र प्राणाधिदैविकत्वबोधनेनेह ब्रह्मणि नानात्वनिषेधेन च ब्रह्मणः सर्वेन्द्रियगुणरूपत्वपोषणाच्च । न्यायविरोधोऽपि नात्रोपपद्यते । अरूपवत्सूत्रे तन्मतानुसारेण "अस्थूलमनणु" "अशब्दमस्पर्शमरूपमव्ययम्" "दिव्यो ह्यमूर्तः पुरुषो स बाह्याभ्यन्तरो ह्यजः" इत्यादिश्रुतिषु रूपाभाव एव व्यासोऽभिप्रेयात्तदा मतुपं विनापि बहुव्रीहिणाऽरूपशब्दादेव तादृक्प्रतीतिसौकर्याच्छ्रुतिसामानाधिकरण्याच्चारूपमेवेत्येव ब्रूयात् । अत एवम्वदता श्रुतौ रूपवद्वैलक्षण्यमेवाधिकं बोध्यते, न तु रूपाभावः । दिव्यो ह्यमूर्त इत्यत्रापि मूर्तामूर्तवैलक्षण्यमेव बोध्यते । पुरुषत्वादिकथनाच्च नाकारनिषेधः । अरूपवदित्यादिसूत्राणां तात्पर्यं त्वग्रे वक्ष्यमाणत्वान्नात्र विस्तरः । एवमेव प्रकृत इत्यादिसूत्रेऽपि विषयवाक्योक्तमूर्तामूर्तलक्षणरूपद्वयप्राप्तेरेकतरवैयर्थ्यात्, तत्र प्रकृते ब्रह्मणि प्रकृत्य ब्रह्मणो मूर्तामूर्तमात्रतानिषेध एव सूत्रकाराशयः । उभयविलक्षणस्यैव ब्रह्मणोऽङ्गीकारात् । तत्र श्रुतिं प्रमाणयन्ति—**सर्वानि**त्यादि । प्राणिनां सर्वान् पाप्मनः सेवाप्रतिबन्धान् औषत्स्वप्रमेयबलेनेत्यर्थः । तस्माद्धेतोः पुरुषो नारायणपदवाच्यो भवतीत्यर्थः । ननु प्रजापतित्वप्रतिबन्धकारणभूतानां असङ्गाज्ञानलक्षणसर्वपाप्मनां कर्मज्ञानभावनानुष्ठानैर्दहनं श्रूयते, न तु सेवाप्रतिबन्धकानामुद्वेगादीनाम् । तथाहि—"वैराजपदसम्प्रेप्सोर्यजमानमहाजनात् । एनांस्यौषद्यतोऽग्रेऽतः सम्वृत्तः पुरुषाभिधः । औषत्स्वां पाप्मनः पूर्वं ज्ञानाद्यतिशयाग्निना । वैराजपदलिप्सुभ्यस्तेनासौ पुरुषाभिधः । पुरुषोऽस्मीत्युपास्त्यर्थं पुरुषार्थोऽयमुच्यते । ओषतीत्युक्तितः साक्षात् गुणोपास्तिः फलश्रवात् ।" इत्यादिभिः सुरेश्वराचार्याः प्रजापतित्वकामनया सगुणोपासनमाहुः । तेन हि भवितुमर्हति पुरुषो परं ब्रह्म वा सेवाप्रतिबन्धकोद्वेगादीनामोषिता वा, इति चेन्मैवम्;

सहस्रपात्'' इत्यादिश्रुतिभिः पुरुषत्वस्य निगमनात्। श्रुतौ सहस्रशब्दोऽनन्तवचनः। अन्यथा शीर्ष्णः सहस्रत्वे चक्षुषोर्द्विसहस्रत्वापत्तेः।

---

प्रयोगप्राचुर्याच्चात्मसामान्ये तस्य शक्तेरावश्यकत्वेन तत एवोपपत्तेर्न विष्णौ विशिष्यशक्तिः कल्पयितुं शक्या बर्हिराज्याधिकरण (१–४–८) विरोधात्। नामधेयपादे "बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः" इत्यत्र बर्हिराज्यपुरोडाशशब्दाः शास्त्रानुयायिभिः संस्कृतेषु प्रयुज्यन्ते, इतरैस्त्वसंस्कृतेषु। तथा सति किमेषां यूपादिवत्संस्कार उत जातिरिति संशये पील्वादिशब्दवच्छास्त्रानुसारिप्रसिद्धेर्बलीयस्त्वात् संस्कारस्यैव निमित्तत्वमिति पूर्वः पक्षः। उत्तरस्तु "अन्वयव्यतिरेकाभ्यां जातेरेव निमित्तता, न संस्कारस्य, व्यभिचारात्" इत्येतदुपन्यस्येत्यर्थ इति वाच्यम्। पुरुषशब्दस्य बर्हिराज्यादिशब्दवदत्र केवलरूढत्वाभावात्। निरुक्ते "स यस्मात्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः" इतिबृहदारण्यकश्रुतिरेव तत्र योगत्वं निरूपयति। न च यौगिक एवेति शङ्क्यम्। सर्वेषां शब्दानां ब्रह्मणि रूढेः श्रीमदाचार्यचरणैः पण्डितपुरन्दरश्रीपुरुषोत्तमपादैश्चोपपादितत्वात्। तस्याश्च शक्तिसङ्कोचोत्तरमपि "तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते। विना तं पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक्। भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधीति वर्तेते वासुदेवे सनातने। ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिन्नराः। ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति" इत्यादिषु निरुपाधिपदेन तदुपबृंहणादन्येषु पुरुषांशस्य हेतूकरणाच्च विशिष्यापि तत्रैव व्यवस्थितेः। एवं च "पुरुषौ चात्ममानवौ" इत्यभिधानस्मृतिरपि व्यावहारिकशक्तिसङ्कोचरूपेति भगवति पूर्वोक्तवाक्यैर्विशिष्य व्यवस्थापितां शक्तिं न प्रतिबद्धुमीष्टे। किञ्च, बर्हिराज्याधिकरणेऽव्यभिचारः सिद्धान्तयुक्तिः। सा च लौकिकस्यापि पुरुषपदप्रयोगस्य वस्तुतो भगवदव्यभिचारान्न हीयते। बर्हिराज्यादिशब्दानां जातिशब्दत्वे "बर्हिषा यूपावटमस्तृणाति" इत्यादिवाक्योपपत्तिः फलम्। विशिष्यसंस्कारवाचित्वे चासंस्कृतेषु तृणादिषु बर्हिराज्यादिशब्दप्रवृत्त्यभावात्तेन शब्देनानुवादाशक्त्या प्राथमिकसंस्कारानुपपत्तिः, शब्दप्रवृत्तौ संस्कारसिद्धिः, तत्सिद्धौ च शब्दप्रवृत्तिरित्यन्योन्याश्रयदोषः। प्रकृते तु पुरुषशब्दस्य जातिशब्दत्वे "पुरुष एवेदꣳ सर्वम्" इत्याद्युक्तसर्वत्वादेः सर्वेष्वात्मसु प्राप्तौ महिम्नः साधारणत्वापत्त्या "एतावानस्य महिमा अतो ज्यायांश्च पूरुषः" इतिश्रुत्युक्तपुरुषोत्कर्षासाधारण्यबाधकप्रसक्तिर्दोषः। विशिष्यभगवद्वाचित्वे च तदुपपत्तिरिति वैपरीत्यम्। किञ्चात्मशब्दोऽपि सत्त्वमूर्तौ विशिष्य रूढः। अन्यथा "दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्" इत्यस्यासङ्गतत्वापत्तिः। एवं चात्मशब्दस्य विशिष्य विष्णुवाचकत्वे, आत्मपर्यायस्य पुरुषशब्दस्यापि साक्षान्नारायणवाचकत्वम्। अतः कथमपि

न च पुरुषसूक्तस्य विराण्निरूपकत्वेन न परब्रह्मनिरूपकत्वमिति विभावनीयम् ।
"सहस्रशीर्षा" इत्यादिना पुरुषं निरूप्य "ततो विराडजायत" इति कथनादस्य

---

ननु "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यनेन सर्वभूतात्मकस्य क्षरत्वेनोक्तत्वात् कूटस्थस्य चाक्षरपुरुषत्वोक्त्या चात्रापि क्षरस्याक्षरस्य वा पुरुषशब्दत्वं कथं नाद्रियते । कथं वा पुरुषस्य पुरुषोत्तमस्य घटपटात्मक-जगद्रूपत्वं प्रतिपाद्यते ? उच्यते, द्वाविमावित्यत्र क्षरत्वं च भगवदिच्छया प्रकृतिसंसर्गोपा-धिकृतम् । अतो जायते म्रियते इति प्रवाहो न वस्तुतः । तदेतत्स्वयं व्याचष्टे "क्षरः सर्वाणि भूतानि" इत्यादिना । ब्रह्मादिस्तम्बपर्यन्तानि व्यष्टिभूतानि जीवजडशब्दाभिलपनीयानि भगव-त्सच्चिदंशभूतानि चराचरत्वेन व्यपदिश्यमानानि । क्षरः पुरुषः । "आब्रह्मभुवनात्" इतिवा-क्यात् । अत्रैकत्वनिर्देशो व्यष्टीनां समष्ट्यैक्याशयेन । अचित्संसर्गोपाधिना वेति केचित् । कूटस्थो मूलभूतः सच्चिदानन्दात्मा भगवद्धामादिपदवाच्योऽपि स महदादि सृष्ट्वा कूटे भूतस-मुदाये तिष्ठतीति वा मूर्धन्यमणिरिव । "अविनाशी वा अरेऽयमात्मा" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यौपनिषदज्ञाने साक्षात्कृतो योऽक्षरः स पुरुष उच्यते । भगवद्धर्माणां श्रुतावुपदेशादधिदैवादिष्वन्तर्यामी भगवानेवेत्यर्थकात् । "अन्तर्या-म्यधिदैवादिषु" इत्यादिना साङ्ख्यमतं निराकृत्योक्तन्यायेन जीवान्तर्यामीति प्राप्ते "शारीर-श्चोभयेऽपि हि भेदेनैनमधीयते" इतिसूत्रमुक्तवान् भगवान् व्यासः । एतदर्थस्तु—नेत्यनुवर्तते, शारीरश्च जीवोऽन्तर्यामी हि यतः उभयेऽपि काण्वा माध्यन्दिनाश्च एनं "विज्ञाने तिष्ठन्नि"त्या-दिना प्रकारान्तरेणान्तर्यामिणो भेदेनैव जीवेऽधीयन्ते । निःसन्देहार्थमुभयग्रहणम् । "यो विज्ञाने तिष्ठन्" इति काण्वाः । "य आत्मनि तिष्ठन्" इति माध्यन्दिनाः । विज्ञानात्म-शब्दयोः शरीरपरत्वेन तयोर्भेदस्य स्पष्टत्वादिति भावः । एतेन शारीरो जीवः । अन्तर्याम्य-क्षर इति सिद्धम् । तथाच क्षराक्षरपरत्वेन पुरुषोत्तमस्य प्रतिपादिका श्रुतिः । "यत्तदद्रेश्यमग्रा-ह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं, तदव्ययं परिपश्यन्ति धीराः" इत्युक्त्वा "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति, यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्" इत्यक्षरस्वरूपं निरूप्य "अक्षरा-त्परतः पर" इत्युक्तम् । क्षरात् परोऽक्षरात् परः पुरुषोत्तम इत्यर्थः । तेन परत्वोपपादनेन स्पष्टं पुरुषोत्तमस्वरूपमुदितम् । तेनाक्षरस्य ब्रह्मत्वं तस्मात्परब्रह्मत्वं पुरुषोत्तमस्येति । किञ्च "तद्वै-तदक्षरं ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्" इत्यादिनाऽक्षरस्य ब्रह्मत्वं श्रुतौ निरूपितम् ।
[illegible] निरस्तम् । स्वस्वरूपमाह—"उत्तमः पुरुषस्त्वन्यः" इति ।

**विराड्जनकत्वम्, न तु विराड्रूपत्वमिति यथा तथोपपादितं पीयूषलहर्याम्।**

**अथवा पूर्षु सकलप्राणिशरीरेषु शेत इति पुरुषः। नेदं शयनं निद्रारूपमिति शङ्क्यम्। तस्य सम्भोगार्थकत्वस्य द्वितीये "भूतैर्महद्भिर्य इमाः" इति श्लोक-**

---

यद्वा, नन्वक्षरपरमपुरुषोत्तमयोरपि को विशेषस्तत्राह परमात्मेति। परमश्चासावात्मा चेति गङ्गाध्यात्मदेवतयोरिव (सिद्धान्तमुक्तावल्युक्तप्रकारेण) तयोः स्वरूपमिति तात्पर्यम्। तथाच क्षराणि प्रकृतिकार्याणि तत्सम्बन्धी क्षरः, तदुत्कृष्टोऽक्षरः, तदुत्तमः पुरुषोत्तमः श्रीकृष्ण इत्यर्थः। एतदेवाष्टमाध्याये "अव्यक्ताद्व्यक्तयः सर्वाः" इत्यादिना। क्षरस्वरूपं निरूप्य "परस्तस्मात्तु भावोऽन्यः" इत्यादिना अक्षरब्रह्मस्वरूपमुक्त्वा "पुरुषः स परः पार्थ" इत्यादिना पुरुषोत्तमस्वरूपं निरूपितमित्यलं विस्तरेण।

शङ्कराचार्यमतं खण्डयन्ति **नचेत्यारभ्य पीयूषलहर्यामित्यन्तेन**।

अर्थान्तरमाहुः—**अथवेति**। **पूर्ष्विति**। **शेते** निरोधं सम्पादयतीत्यर्थः। "निरोधोऽस्यानुशयनम्" इति वाक्यात्। अत एव शयनस्य निद्रारूपत्वं निषेधयन्ति—**नेदमित्या**दिना। "शयानो याति सर्वतः" इति श्रुतेः, शयानस्य सर्वत्र गमनमुक्तमतो नेदं शयनं निद्रारूपं सम्भवतीत्यर्थः। श्रीसुबोधिनीमुदाहरन्ति—**तस्येत्यारभ्योपदिष्टत्वादित्यन्तेन**। तथाहि "भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः। भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान्वचांसि मे" (२।४।२३) भूतैर्महद्भिः पञ्चमहाभूतैः स्वनिर्मितैरेव। इमाः देवतिर्यङ्मनुष्यादिरूपाः। अमूषु पूर्षु शेते। अन्यथा स्वस्य पुरुषत्वमेव न स्यात्। षोडश गुणान्, षोडशात्मको भगवान् भुङ्क्ते। "**इदं हि शयनं न निद्रारूपं किन्तु सम्भोगार्थमेव**" इदंच शयनं भगवन्माहात्म्यस्य सर्वत्र पूर्णत्वबोधनायैवेति बोध्यम्। ननु शयनस्य निरोधार्थकत्वमनुपपन्नम् "निरोधोऽस्यानुशयनम्" इत्यत्र निरोधार्थकस्यानुशयनरूपेणोक्तत्वात्, इति चेन्न, शयनस्य "इदं हि शयनं न निद्रारूपं किन्तु सम्भोगार्थमेव" इति श्रीसुबोधिनीवाक्यानुरोधेन सम्भोगार्थकत्वेनोक्तत्वात्। सम्भोगश्च स्वस्थितरसाविर्भावेन भेदरूपमात्मानं विधाय अन्योन्यस्य रसानुभवः। अत एव "स्थितिर्भोगश्च सर्वत्र भगवत्कृतकौ यतः" इत्यत्रापि स्थितेर्भोगस्य च सहोक्त्या भगवत्कृतकत्वोक्त्या च शयनमित्यस्य सम्भोगार्थं स्थितिरेवेत्यर्थः स्वीक्रियते। स्थितिरपि स्वशक्तिभिरेव यदा भवेत्तदैव रसाविर्भावः। अत एव "निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः" इत्ययमेव निरोधो "प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिः" इति कथ्यते साम्प्रदायिकैः। "या तु व्यसनसम्पत्तिर्निरोधः स तु कथ्यते" इति भरताचार्याः। व्यसनस्य तु कृतार्थकत्वं उच्यते

सुबोधिन्यां श्रीमदाचार्यचरणैरुपदिष्टत्वात् । तथा च—"नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् । व्याप्य शेते महानात्मा तस्मात्पुरुष उच्यते" इति भारतीयशान्तिपर्ववाक्यात् । अथवा पूर्णत्वाद्वा पुराणत्वाद्वा सदनाद्वा पुरुषः "पूरणात्सदनाच्चैव ततोऽसौ पुरुषो मतः" इति भारतीयोद्योगपर्ववचनात् । नारायणभिन्नानां परत्वपरिहारायाग्रिममाह—नारायण इति । नराणां

---

स्फुटमेव । "नारायणे कमलवत् स्थायिभावात्मके स्वस्मिन् विचित्रान् भावानुत्पाद्य ब्रह्मवत्तादृशं कञ्चन प्रचरं भावमुत्पादितवान् येन तल्लीलाविवरणात्मकमखिलरसात्मकं जगदाविरभूदिति तेन शयनपदोक्त्या नारायणे तत्प्रसिद्धमिति" इति श्रीमत्प्रभुचरणा आज्ञापयामासुः। शयनशब्दस्य भावार्थकत्वपक्षे शय्यते स निरोधः । करणपक्षेऽपि शय्यते शक्तिभिरिति निरोधः । तथाचात्र लिङ्गोपहितलैङ्गिकभानवत् करणोपहितैव क्रियोच्यते, क्रियोपहितं वा करणमिति व्युत्पत्तिद्वयेऽप्यदोषः । करणोपधानं तु द्वितीयसुबोधिन्यां "शक्तीः शाययित्वा तद्भोगार्थं स्वस्य शयनम्" इत्याहुः श्रीमदाचार्यचरणाः । शयनाधिकरणसकलप्राणिशरीरस्य पूर्वाच्यत्वे किं मानमित्यत आहुः—**नवद्वारमि**ति । श्रीमद्भागवतेऽपि "यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् । नवद्वारं द्विहस्ताङ्घ्रिं तत्रामनुत साध्विति" इत्यत्र प्रदर्शितम् । पुरुषो हि नवद्वारे पुरे सुप्त्वा नैर्गुण्यं सम्पादयति ।

तस्यैव पुरुषस्य पूर्णत्वं सर्वाधारत्वं चाहुः—**अथवे**ति । "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतेः । महाभारतमुदाहरन्ति—**पूरणा**दिति । ननु नारायणस्यैव पूर्णत्वं पुरुषोत्तमत्वं च कथमुच्यतेऽन्यत्राक्षरब्रह्मवाचित्वादित्यत आहुः—**नारायणभिन्नाना**मिति । नहि नारायणात्परः कश्चिदस्तीत्यर्थः । ननु प्रश्नोपनिषदि परापरे द्वे ब्रह्मणी अङ्गीकृत्य, यदविद्याकृतनामरूपादिविशेषप्रतिषेधेनास्थूलादिशब्दैर्ब्रह्मोपदिश्यते तत्परम्, यत्पुनर्नामरूपविशेषाणां केनचिद्विशिष्टोपासनयोपदिश्यते तदपरमतोऽत्रापि नारायणस्य नामरूपादिविशिष्टत्वादपरं ब्रह्माक्षरं ब्रह्मैवोच्यतामिति चेत् न; नारायणस्य पुरुषत्वोक्तेः "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रवणाच्च परमकाष्ठापन्नः श्रीकृष्ण एव नारायणादिपदवाच्यो नाक्षरं ब्रह्म । **नारायण इती**ति । नरन्ति पूर्वपुरुषानुत्तमां गतिं प्रापयन्ति ते नराः भक्ताः । भक्त एव स्वपूर्वजानुत्तमां गतिं प्रापयति इति भागवतादिषु स्पष्टमेव । नराणां समूहो नारम् । तस्य समूह इत्यण् । तत्सर्वमयते प्रविशति यमिति

भक्तानां समूहो नारम्, तत्सर्वमेवायते प्रविशति यमिति नारायणः। "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इति गीतावाक्यात्। न च "आपो नारा इति प्रोक्ता आपो वै नरसूनवः।" इत्यत्रोक्तं नरभूजलायनत्वमत्र शङ्क्यम्। नरभूजलायनस्यैतस्या-

---

विग्रहः। भक्तानां प्रवेशे किं मानमित्यत आहुः—**गीतावाक्यादिति**। वाक्यार्थस्तु तत्त्वदीपिकायां श्रीवल्लभा आहुः **भक्त्येति**। स मदीयया भक्त्या निर्गुणया निर्गुणविषयकत्वात्परया मामेकं निर्गुणं पुरुषोत्तममभिजानाति तत्त्वतः यावान् यश्चास्मीति यादृशैश्वर्याद्यनन्तालौकिकगुणविशिष्टो यादृशलीलापरिकरसहितः, प्राकृतगुणसृष्टिरहितो ब्रह्म-परमात्माभगवानितिभेदेन ततो नामविस्तृतोऽस्मि यथा तथा मामभिजानाति एवमभिज्ञानमुक्तं भागवतचतुःश्लोक्यां "यावानहं यथाभावो यद्रूपगुणकर्मकः" इत्यादि तदनन्तरं तत्त्वतो मां पुरुषोत्तमं ज्ञात्वेत्यनुवादः। तत्त्वतो वा पुरुषोत्तमं मां विशते। प्रवेश एव फलम्। "निर्गुणा मुक्तिरस्माद्धि सगुणा सान्यसेवया" इति निबन्धे, "अलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वा वैकुण्ठादिषु" इति सेवाफले च निरूपितम्। अथवा आविशते पुरुषोत्तमाविष्टो भवति। अत एवोक्तमाचार्यैः सुबोधिन्यां "शुको भावनया गोकुले स्थित्वाह 'य एतदिति स भगवानिति' च"। तेन ब्रह्मभूतोऽपि शुकः श्रीपुरुषोत्तमभक्तितत्त्वज्ञानतः पुरुषोत्तमाविष्ट एव तल्लीला-मध्यपाती भवतीत्यवसीयते। तदनन्तरं तेन नान्तरं भेदो यथा भवति तथेति वा। तथा च श्रुतिः "ब्रह्मविदाप्नोति परं यदक्षरे परमे व्योमन् यो वेद निहितं गुहायां सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति। एतेनाक्षरमार्गात् भगवन्मार्गे वैलक्षण्यं, यत्र भग-वानेव प्रमाणं प्रमेयं चेति दर्शितम्" इति। अथवा नराणां भक्तानां समूहो नारम्, तदयते जानाति सर्वसाक्षिकत्वादित्यर्थः। नारम् अयते प्रवर्तयति सर्वप्रवर्तकत्वादिति वा। अय गतौ। कृत्यलुटो बहुलम् इति ल्युट्। नराज्जातानि तत्त्वानि तत्समूहो नारम् तदयते जानाति आययति प्रवर्तयति वा। नरस्य भक्तसमूहस्य अयनं पन्थाः भक्तानां भगवदेकपरत्वादिति भावः। नारायणस्य सर्वेश्वरत्वं ब्रह्मणैवोक्तम्। तथाहि "नारायणस्त्वं नहि सर्वदेहिनामात्मास्य-धीशोऽखिललोकसाक्षी" इति। आत्मा हि सर्वभूतेषु तिष्ठति "अहमात्मा गुडाकेशः सर्वभू-ताशयस्थितः" इति गीतास्मृतेः। तेन नारम् जीवसमूहो अयनं यस्येति पुरोदीरितव्युत्पत्त्या नारायणः सर्वात्मेति बोध्यम्। प्रवर्तनत्वसाधको हेतुरत्रैव ब्रह्मवाक्ये अधीशेति

**ङ्गरूपत्वात् । तद्रूपस्यापि प्रदर्शनमात्रपरकत्वाच्च । अन्यथा "तच्चेज्जलस्थम्" इति भागवतवाक्यविरोधापत्तेः । अस्य तु "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतिप्रकटितपरब्रह्मत्वस्य "नारायणपरा वेदा देवा नारायणाङ्गजाः । नारायणपरा लोका नारायणपरा मखाः । नारायणपरा योगा नारायणपरं**

---

नरभूजलायनस्य तदङ्गत्वेनावधारणत्वात् । तथा च तत्रैव ब्रह्मवाक्यम् "नारायणोऽङ्गं नरभूजलायनात् तच्चापि सत्यं न तवैव माया" इति । विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः । प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् । तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति वाक्यान्नारायणो नरभूजलायनो हि पुरुषस्य परब्रह्मणोऽङ्गमेव । किञ्च नारायणशब्दो वस्तुतस्तथा न व्युत्पन्नः, यतो जलवासस्य प्रदर्शनपरत्वात्, नह्यवस्तुना शब्दो व्युत्पद्यते, अन्यथा रजतदाने शुक्तिकामपि दद्यात्, अतो जलस्थितेः प्रदर्शनमात्रपरत्वात् तेन न नारायणयोगार्थः सिद्ध्यति । तदेतज्जलाधिकरणत्वं न सत्यं किन्तु माययैवेत्येतत्प्रदर्शयन्ति—**अन्यथेत्यादिना** । "तच्चेज्जलस्थं तव सत् जगद्वपुः किं मे न दृष्टं भगवंस्तदैव । किंवा सुदृष्टं हृदि मे तदैव किं नो सपद्येव पुनर्व्यदर्शि" इति तुरीयप्रस्थानवाक्यविरोधः स्यादित्यर्थः । एतदुपनिषत्प्रतिपाद्यस्य भगवतो नारायणस्य परब्रह्मत्वे श्रुतिभागवतप्रमाणमाहुः—**अस्य त्विति** । ननु सर्वैरपि वेदैर्न नारायण एव वेद्यः, वेदेषु सकलपदार्थस्य निरूपणादिति चेन्न "वेदैश्च सर्वैरहमेव वेद्यः" इति गीतावाक्यविरोधात् । ब्रह्मवादेऽग्निसोमसूर्यवाय्विन्द्रादीनां भगवदन्तर्यामित्वेन भगवद्रूपत्वात्तत्प्रतिपादनपरो वेदो भगवत्त्वमेवाह सर्वस्य । नहि नारायणात्परं किञ्चिदस्तीति वाच्यम् । पदार्थजातानां नारायणपरत्वमेव श्रीभागवते प्रतिपादितत्वात् । तदेवाहुः—**नारायणपरा** इति । वेदाः शब्दतोऽर्थतोऽभिधानतश्च भगवत्पराः । तत्र वेदानां भगवन्निःश्वासान्निर्गतानां पुनस्तत्रैव प्रवेक्ष्यमाणानां भगवति नारायण एव तात्पर्यमिति निर्विवादम् । मध्येऽपि ते स्वार्थं प्रत्याययन्तस्तदर्थस्य भगवद्रूपत्वाद्भगवत्परा एव भवन्ति । ननु वेदानां विध्यर्थवादमन्त्रनामधेयात्मकत्वान्न तेषां भगवति तात्पर्यम् । तत्र विध्यर्थस्य पुरुषप्रयत्नप्रेरणालक्षणस्य पुरुषप्रयत्ने तात्पर्यम् । पुरुषप्रयत्नाभिव्यङ्ग्यभावे वा । विधेयार्थस्तवने त्वर्थवादाः । मन्त्रा अपि याज्याव्यतिरिक्ता देवताप्रतिपादनस्तुत्यादावुपयुक्ताः । याज्यास्तु देवतोद्देशेन द्रव्यत्यागे । नामधेयान्यपि धात्वर्थावच्छेदेन तात्पर्ययुक्तानि । तस्मात्तदर्थे उपक्षीणानि कथं भगवति तात्पर्यमावहन्ति तत्राह भगवान्बादरायणः—**देवा नारायणाङ्गजाः, नारायणपरा लोका नारायणपरा**

**तपः। नारायणपरं ज्ञानं नारायणपरा गतिः।" इति द्वितीयस्य पञ्चमे व्यासेन स्फुटमुक्तत्वात्। श्रीमदाचार्यचरणैस्तत्र तथैव विवृतत्वाच्च।**

**किञ्च "युवां श्लाघ्यतमौ नूनं देहिनामिव मानद। नारायणेऽखिलगुरौ यज्जाता मतिरीदृशी" इति श्लोकसुबोधिन्यां "अयं हि नारायणो मूलपुरुषः,**

---

तु न व्यापारः। यागेनाजन्यत्वात्, कल्पनायां मानाभावात्, दृष्टस्य व्यापारस्य विद्यमानत्वाच्च। ते हि देवतोद्देशेन द्रव्यत्यागं कुर्वन्तः स्वर्गं साधयन्ति। देवता च विधिहुतं हविरादाय किञ्चिदुपकरोति। अन्यथा देवतोद्देशेन द्रव्यत्यागो यागो न भवेत्। द्रव्यसंस्कारकत्वेनापि देवतोपयोगस्य वक्तुमुचितत्वात्। निर्वापादारभ्य तत्सम्बन्धवचनस्य च प्रोक्षणादिवत्संस्कारपरत्वं घटते। न च प्रीतिर्व्यापारः। सा हि अन्यधर्मवती स्वर्गं न साधयति। देवता तु स्वर्गादावधिकृता फलं दातुं शक्नोति। अतो द्रव्येण प्रीता देवता व्यापारः। सा च नित्या चेतना च। यथानुरूपं फलं नियमयितुं शक्ता। किन्तु तस्या अपुरुषार्थत्वात्पुरुषस्याभिप्रेता न भवति। अतो न तावता यागस्यान्यथासिद्धिः। अतो मध्ये व्यापाररूपदेवतापरत्वेऽपि भगवत्परत्वम्। यतो देवा नारायणस्याङ्गेभ्यो बाह्वादिभ्यो जाताः। न ह्यङ्गसेवार्थं प्रवृत्ता अङ्गे तात्पर्ययुक्ता भवन्ति, किन्त्वङ्गिनि। किञ्च यत्र देवता व्यापारत्वेन गृहीता स स्वर्गादिरुद्देश्यो भवति। तस्य लोकत्वे "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इति वाक्यात्सुखत्वे वा भगवदीयत्वं न व्यभिचरति। स्वर्गादीनां "हृदा स्वर्गादिलोकः" इत्यादिना तदवयवत्वेन प्रतिपादनात्। **योगो** हि चित्तवृत्तिनिरोधात्मकः। न हि योगो नाम कश्चित्पुरुषार्थस्तस्य पुरुषार्थसाधनरूपत्वात्। न चाणिमादिसिद्धीनां योगस्य फलत्वेनोक्तत्वात् योगस्य नारायणपरत्वं नास्तीति वक्तव्यम्। मोक्षपर्यवसायित्वाभावेऽशास्त्रत्वापत्तेः। अतो योगो भगवति चित्तैकाग्र्यं साधयित्वा नारायणपरो भवतीत्यवधेयम्। तपस्तु भगवदुपयोगि देहेन्द्रियसम्पादकत्वेन तत्परमेव। अन्यथा क्लेशात्मकस्य तस्य पुरुषार्थपर्यवसानं न स्यात्। ज्ञानं द्विविधम्। औपनिषदं साङ्ख्यसिद्धं च। तच्च यद्यपि परस्परं विरुद्धम्। तथापि ज्ञानस्य ज्ञेय एव तात्पर्यम्। ज्ञेयस्तु न हि भवितुमर्हति नारायणादन्यः कश्चित्। श्रुतिविरोधापत्तेः। आत्मत्वात्सर्वत्वाद्ब्रह्मत्वाच्च। **गति**रपि भगवत्परैव। सा हि ब्रह्मज्ञानफलं भवति। विस्तरस्तु श्रीसुबोधिन्यां तत्प्रकाशे च द्रष्टव्यः।

**नारायणशब्दोऽत्र पुरुषोत्तमवाची" इति फक्किकयाऽस्य मूलपुरुषत्वं श्रीमदाचार्यचरणैर्व्यक्तमाज्ञाप्यते ।**

**ननु नैवं वक्तुं युक्तम्, "अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः । एकस्तद्वेद भगवान्धाता नारायणो विभुः । नारायणादृषिगणः" इत्यादिमोक्षधर्मीयवाक्यैर्नारायणस्य सर्वज्ञानिमुख्यत्वस्य परब्रह्मवित्त्वस्य प्रतिपादनादीश्वराद्भेदस्य च कथनान्न ब्रह्मत्वमिति चेत्; अत्रेदं तत्त्वम्—तत्र नारायणपदस्य "आपो नारा इति प्रोक्ताः" इति वाक्यविषयत्वम्, धातृपदविशेषितत्वात्;**

---

मिति चेत्? उच्यते, न ह्यत्रोद्धवेन केवलं पुत्रत्वमुच्यते, किन्तु नारायणे प्रेमातिशयो कथ्यते । तत्र नारायणशब्देन पुरुषोत्तम एवाभिप्रेत इत्यत आहुः—**श्रीमदाचार्यचरणैर्व्यक्तमाज्ञाप्यत** इति ।

ननु कथमयं नारायणशब्दो पुरुषोत्तमवाचको भवति, अन्यत्र तु नारायणस्याक्षरत्वमुच्यत इत्यत आह उद्धवः—अखिलगुरौ । अयं हि नारायणो अखिलानां चराचराणां गुरुः प्रकाशकः "गुशब्दस्त्वन्धकारे स्याद्रुशब्दतन्निरोधकृत्" इति वाक्यात् । यद्वा गॄनिगरणे इत्यतः "कृग्रोरुच्च" इत्यौणादिके गिरति भक्तानामज्ञानं भक्षयतीति गुरुः । गॄशब्दे इत्यतश्च गृणात्युपदिशति स्वस्वरूपमित्यर्थः । तेन प्रमाणरूपोऽपि भगवानेव । क्र्यादिगणीय'गॄशब्दे' इति धातोरौणादिके प्रत्यये कृते अखिलोपदेष्टृत्वान्नारायणादन्यस्य वेदवक्तृत्वं नास्तीत्यवधेयम् । अतः सर्वशास्त्रार्थरूपे प्रमेयबलवति यद्यस्मात्कारणादेतादृशी मतिः कृता इति सम्बन्धः। नन्देन देवोत्तमत्वं तूत्कटकोटिकत्वाज्ज्ञातमेव, तस्मादसम्भावना न भविष्यतीति मनसि कृत्वा पुरुषोत्तमत्वं ज्ञपितवानुद्धवः । श्लाघ्यतमत्वविशेषणेन भक्तेरधिकं कर्तव्यं नास्तीति द्योत्यते । अखिलगुरुत्वकथनेन मूलपुरुषत्वमपि स्फुटीभवति । "सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे। नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे" इति मन्त्रेऽपि 'गुरवे' इत्यनेन विद्यादातृत्वात्स्वस्वरूपप्रकाशकत्वाच्च श्रीकृष्णस्य मूलरूपत्वम् । ननु गुर्वाचार्यादयः शब्दा विद्वत्सु प्रयोज्याः, आचार्यादिशब्दानां प्रवृत्तिनिमित्तकस्य विद्याया एव सत्त्वात्, इति चेच्छृणु, "त्वं हि नः पिता योऽविद्यायाः पारं तारयसि", "ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम्", "विद्याविद्ये मम तनू" इत्यादिश्रुतिस्मृतिवाक्येभ्यः श्रीकृष्ण एवाखिलगुरुरिति सिद्धम् ॥

नारायणस्येश्वराद्भेदमधिकृत्य शङ्कन्ते—**नन्विति**। समादधते—**अत्रेदं तत्त्वमिति** । **धातृपदविशेषितत्वादिति** । 'डुधाञ्' धारणपोषणयोः इति धातोस्तृचि रूपम् । अत्र हि धारणं धात्वर्थः । तेन सर्वाधारकत्वं धातृशब्दार्थः । तच्चाक्षरब्रह्मण एव सम्भवति । "दृश्य-

## अत्र तु "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ"

---

नारायणस्य मूलपुरुषत्वं प्रमाणपरम्परया प्रतिपादयन्ति–**अत्र त्वित्यादिना**। **एक इति**। "एकमेवाद्वितीयं ब्रह्म" इतिश्रुतेः। **न ब्रह्मेति**। ब्रह्मा नासीदित्यर्थः। "नारायणाद्ब्रह्मा जायते" इति वक्ष्यमाणत्वात्। तेन नारायणादेव नाभिजन्मनः प्रादुर्भवनोक्त्या "धाता यथापूर्वमकल्पयत्" इति श्रुतिः स्रष्टुर्नाभिनालजातस्य जगत् कारणे प्रमाणमित्यपि न वाच्यम्। श्रुतिरियं "ऋतं च सत्यं चाभीद्धा" इत्यारभ्य विधेर्विष्णोः प्रादुर्भावं प्रतिपाद्य तस्य च तपश्चरणमुक्त्वा सृष्ट्यर्थं प्रवृत्तिराह "धाता यथापूर्वम्" इत्यंशेन। ननु वेधसो विधानं विश्वहेतुत्वे। अत्रैव ब्रह्मणः पूर्वं ज्ञानाभावे "भगवन्सर्वभूतानामध्यक्षोवस्थितो गुहाम्" इत्यादि तत्कृतविज्ञापनयाविर्भूतेन भगवता सप्तश्लोक्युपदिष्टा। तत्रैव नारायणस्य मूलपुरुषत्वं ब्रह्मेशानयोश्च तदंशत्वं च निरूप्यते "अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्। पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्" इत्यनेन। अत्रैव सुबोधिन्यां श्रीमन्महाप्रभुपूज्यपादाः "यादृग्रूपं भगवान् जगत्करोति तच्छिक्षायां प्रार्थितम्। तत्राह। अहमेव तद्रूपो जातः नान्यदिति। अन्यथा भानं च मन्माययेति। जडे देहादौ मध्ये जीवप्रतीतिश्च घटादावाकाशप्रतीतिवत्। आधाराधेयभावो बाह्याभ्यन्तरभेदहेतुश्चाहमेवेति। स्वरूपतो मूलभूतं जगत्, प्रतीतितो मायारूपं, अनुप्रवेशको जीव इति सर्वं जगत्प्रकारेणाहमेवेति ज्ञात्वा स्वरूपमपि तथा ज्ञातव्यम्। इयमेव शिक्षा। एवं मद्रूपो भूत्वा मद्रूपं चेज्जगत्करोति तदा गर्वो न भवतीति तद्धेतुभूतो मोहोऽपि न भवतीति पञ्चानां श्लोकानामर्थः। तत्र सर्वं जगत्कथं भगवानित्याकाङ्क्षायां तज्जलानिति हेतुं विस्तरेण वदति। सृष्टेः पूर्वं अहमेव। "एको नारायण आसीन्न ब्रह्मा नच शङ्करः" "वासुदेवो वा इदमग्र आसीन्न ब्रह्मा नच शङ्करः" इति श्रुतेः सृष्टेः पूर्वमहमेव। किञ्च, मत्तोऽपि पूर्वमिति नाशङ्कनीयम्। यथा जगतः पूर्वमहं मत्तोऽपि पूर्वमदन्यदिति, तदैवं भवेत्, यदि कदाचिदप्यहं नासम्। तत्तु मम न सम्भवति। सद्रूपेणैव निरूपणात्। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इतिश्रुतेरासमेव। अग्रे सृष्टेः पूर्वम्। "असद्वा इदमग्र आसीत्ततो वै सदजायत" इत्यादीनां पश्चात्प्रतीयमानस्य जगतः पूर्वमेतादृशरूपेणानवस्थितित्वप्रतिपादकत्वात्। अन्यथाऽसतः सत्ताबोधकत्वे विरोधः "नासतो विद्यते भावो नाभावो विद्यते सत" इतिवाक्यात्। "नासदासीन्नो सदासीत्तदानीम्" इत्यादेस्तु स्थूलसूक्ष्मकार्यपरत्वम्। आपो वा इदमग्रे सलिलमासीत्" इतित्ववान्तरकल्पाभिप्रायेण। आपो नानाविधानि जलानि इदं तत्कार्यं च जगत्सर्वं सलिलं प्रलयोदकरूपमेवासीदित्यर्थः। "अव्यक्तादीनि भूतानि"

---

तस्याः कार्यैर्कोन्नेयस्वरूपाया अभावात् । एवमन्यान्यपि वाक्यानि तत्तद्भावप्रकारेण बोधयन्ति पूर्वमेकरूपे भगवति न बाधकानि भवन्ति । अत एव श्रुतिसिद्धत्वादन्यानि तत्काले निषेधति—नान्यदिति । सदसतोः श्रुतौ पूर्वसिद्धत्वेऽपि न तयोरन्यत्वम् । तदाह—सदसदिति । सच्छब्देनासच्छब्देन च ब्रह्मैवोच्यत इत्यर्थः । "योऽस्मात्परस्मात्परः" इति परशब्देनापि न कालादिरुच्यते, किन्त्वहमेव । तस्मात्पूर्वमहमेवेति सिद्धम् । अभावास्त्वस्मन्मते तिरोभावातिरिक्ता न भवन्तीति । तस्य च भगवच्छक्तित्वात् । पूर्ववद्धेति न्यायेन शक्तिधर्माणामपि तदोद्भतत्वाभावेन कालस्यापि निरूपणसमय एव तथावचनात्प्रकृतितुल्यत्वेन भगवानेक एव सिद्ध इत्यविवादम् । किञ्च । पश्चादहं, सर्वभवनसमर्थरूपत्वादेव चेष्टावत्प्रादुर्भावः कालस्य पश्चाद्गुणरूपेण शक्तिरूपेण च पश्चात्कार्यरूपेण "स आत्मानꣳस्वयमकुरुत" इतिश्रुतेः । असतः सत्तानङ्गीकाराच्च । यदेतदिति परिदृश्यमानं सर्वम् । चकारादपरिदृश्यमानमप्रसिद्धं च । अनेन जीवा अपि सङ्गृहीताः । त्वमेतच्चेति पाठे जीवजडात्मकं सर्वमहमेवेत्यर्थः । अयं मुख्यो ब्रह्मवादः । ननु पदार्थविरोधे शब्दो न प्रमाणम्, भगवांश्च सर्वदोषरहितः, विकारादयश्च दोषाः, सर्वशब्दे सङ्कोचाभावादुपदेश्याभावः शास्त्रोच्छेदश्च, प्रयोजनाभावात् । हिताकरणादिदोषप्रसक्तिः । पुरुषोत्तमत्वाभावश्च । तस्मादनेकदोषदुष्टत्वाद्ब्रह्मवादोऽनुपपन्नः, इतिचेत्, मैवम्, "प्रत्यक्षादृष्टविषये पदार्थाः श्रुतिबाधिताः । परस्परं विरुद्धास्ते नैकशेषं भजन्ति हि । उभयोर्वैदिकत्वेन कः स्यादत्र नियामकः । विचारकाणां बुद्धिस्तु सोपजीव्या श्रुतेः सदा । क्रियाविद्यापरत्वे तु विकल्पेनैकवाक्यता । दुष्टोऽप्याश्रीयते पक्षो विकल्पाख्यः श्रुतेर्बलात् । तथैव भगवद्रूपं यथा हस्तादयः पृथक् । यथा सर्वाविरोधः स्यात्तथैवात्र विचारणम् । सर्वरूपसमर्थत्वमतो ब्रह्मणि गीयते । अन्यथा प्रतिमानं यदुच्चनीचादिभेदतः । तद्भानं तस्य कर्ता च हरिरेव तथाविधः । यत्किञ्चिद्दूषणं त्वत्र दूष्यं चापि हरिः स्वयम् । विरुद्धपक्षाः सर्वेऽपि सर्वमत्रैव शोभते ॥ योऽवशिष्येत सोऽस्म्यहमि"ति । उद्भूतस्य तस्य तिरोभावप्रापणे यत्तिरोभूतं न भवति, तिरोभावस्तदाश्रयो वा अंशभेदेन वा तदप्यहमस्मीत्यनेन सर्वा एव क्रियास्तद्विषयश्चाहमिति ज्ञापयति ॥" इत्याज्ञापयामासुः । महाभारतेऽपि "मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम् । ततस्तस्मै वरान्प्रीतो ददावहमनुत्तमम् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च" इति वाक्यात् तत्सृष्टित्वेन तदधीनत्वम् । एवं भागवते नारायणेन स्वयमेव स्वस्य मूलपुरुषत्वेन प्रतिपादनात् भारतवाक्ये च नारायणादेव ब्रह्मणः प्रादुर्भावकथनाच्च तस्य मूलपुरुषत्वशङ्का परिहृता बोध्या । **नेशानेति** । ईशानः शिवोऽपि न मूलकारणम् । नच "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" इत्युक्त्या तस्य मूलपुरुषत्वमिति वाच्यम् । "नारायणाद्रुद्रो जायते" इति वक्ष्यमाणत्वात् । "एको

भ्रुवोर्मध्यात्प्रजापतेः । सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥" इत्यनेन । तत्र यदा ब्रह्मा भगवतो गुणावतारः पञ्चपर्वाविद्याधिष्ठातृदेवान् सृष्ट्वा तां पापीयसीं सृष्टिं दृष्ट्वा स्वात्मानं निन्दितवान् । पुनर्भगवद्ध्यानपूतेन मनसा पूर्वस्माद्विलक्षणान्सनकादीन् ससर्ज । तान् स्वभुवः सनकादीन् "पुत्रकाः प्रजाः सृजत" इति बभाषे । किन्तु वासुदेवपरायणास्ते मोक्षधर्माणो यदा नैच्छंस्तदा पूर्वमविद्यासृष्ट्या खिन्नः सनकादिभिश्चावज्ञातश्चुक्रोध । तदा उत्पन्नः क्रोधो भगवदभीष्टकार्ये भगवदंशानुप्रवेशात् तस्मिन्कार्ये आधिदैविको जातः । अत्र हि धिया मन्युर्निगृहीत इत्युच्यते । क्रिया ज्ञानं चेति मनसो व्यापारद्वयम् । तत्र ज्ञानेनैव धियो विग्रहो न तु क्रियया । स च निगृहीतो मन्युर्भ्रूमध्याद्भगवदाज्ञाचक्रस्थानात् सद्यस्तत्क्षणमेव भगवदाज्ञाकारी भगवदंशस्तद्द्वारा विनिर्गतः । स एव मन्युर्नीललोहित इति प्रसिद्धः । अत्र च कुमार इति विशेषेण कुत्सितो मारो यस्येति व्युत्पत्त्या स्वाभाविकसृष्ट्युपयोगिकन्दर्पनाशकत्वं सूचितम् । नीललोहितत्वेन कर्बुरवर्णः सूचितः, तत्र भगवतो नीलो वर्णः, क्रोधस्य च रक्तो वर्णः, उभयमेकीभूय शङ्करस्य नीललोहितः कर्बुरो वर्ण इति ध्येयम् । स च कुमारः नामधामाभिवाञ्छन् रुरोद । अत एव तस्य रुद्रेति नामान्तरम् । "यदरोदीत्तदरोदीत्तद्रुद्रस्य रुद्रत्वम्" इति श्रुतेः । तस्मै एकादश स्थानानि रुद्राण्यश्च दत्त्वा सर्जनायाज्ञापयामास । स च रुद्रः प्रजाः ससर्ज । रुद्रस्य च मन्युजातत्वात् तत्सृष्टिरपि तादृश्येव जगद्ग्रसन्ती समभवत् । तदा "अलं प्रजाभिः" इत्युक्त्या ब्रह्मा तं "तप आतिष्ठ भद्रं ते" इत्यादिना तपश्चरणायाज्ञापयामास । एतेनैतिह्येनेशानस्यापि मूलपुरुषत्वं नास्तीत्यवधेयम् । स च मन्युजातस्तामसोऽशिवः शिवोः भगवत्पादतीर्थनिषेवणेन पूज्यतां गत इत्यपि भागवतवचनेन ज्ञायते । तथाहि—महोपनिषद्यपि—"तस्य ध्यानान्तःस्थस्य ललाटात्र्यक्षः शूलपाणिः पुरुषो जायते" इति श्रूयते । तेनापि नास्य मूलपुरुषत्वम् । "यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्" इति वाक्यप्रतिपादितशिवस्य नारायणात्पूर्ववर्तित्वाभावस्तत्पादसलिलस्य धारणादेवाशिवस्यापि शिवस्य शिवपदवाच्यत्वम् । **नाप** इति । आपो जलानि नेत्यर्थः । "तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् । रूपवत्स्पर्शवच्चाम्भो व्योमवच्च परान्वयात्" इति वाक्यात्तेषां उत्पत्तिकथनात् । नच आप्नुवन्तीत्याप इति व्युत्पत्त्या "अद्भ्य एव पुरुषं समुद्धृत्य" इतिश्रुतेः अद्भ्य एव पुरुषोत्पत्तिर्वाच्या । तस्य भिन्नार्थकत्वात् । तत्र च "स ईक्षत इमाँल्लोकान्नु सृजा इति । स इमाँल्लोकानसृजत ।" इत्यनेन भगवत इच्छया सर्जनमुक्तम् । "तत्राप्यम्भो मरीचीः" इत्यनेन पूर्वमम्भसां सृष्टिः । ततश्च "सोऽद्भ्य एव परुषं समद्धत्यामूर्च्छयत्" इत्युच्यते । तत्रायं भावः, ब्रह्मणा नारायणाद्भ्यः

**इत्यादिमहोपनिषदुपदिष्टस्य ब्रह्मेशानाब्रादीनामुत्पादकस्य तेभ्यः प्राग्वर्तिनो**

---

यत्रासौ प्रतिपद्यते'' इत्यनेन आपः तदिन्द्रियं तद्देवता चोच्यते। तेन नात्र पुरुषशब्दः पुरुषोत्तम-वाचक इति विभावनीयम्। श्रुत्यामपि ''तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाश-द्वायुः वायोरग्निरग्नेरापः'' इति। विशेषस्तु पीयूषलहर्यां द्रष्टव्यम्, विस्तरभिया नात्र विस्तरः। **नाग्नीषोमावि**ति। पौर्णमासप्रधानदेवतयोरग्नीषोमयोरपि मूलपुरुषत्वं नास्तीत्यर्थः। न च ''अग्नीषोमात्मकं जगत्'' इति श्रुतेरग्नीषोमात्मकत्वाज्जगतस्तदेव मूलस्वरूपमिति वाच्यम्। इयं हि श्रुती रामपूर्वतापिन्युपनिषदि श्रूयते। तत्र च ''स त्वनुष्णगु विश्वश्चेदग्नीषोमात्मकं जगत्। उत्पन्नं शीतया भाति चन्द्रश्चन्द्रिकया यथा'' इति सम्पूर्णा श्रुतिः। तदर्थस्तु—''स रामोऽनु-ष्णगुना चन्द्रेण सीतया विश्वो व्याप्तो विष्टितश्चेत्तदा पुम्प्रकृत्यात्मकं जगत् सिद्धम्। अथ चन्द्रेण विश्वो बिन्दुनाऽऽवेष्टितश्चेत्तदाऽग्नीषोमात्मकं जगज्जगद्वाचकं रामिति सिद्धम्। उत्पन्न-मिति पूर्वेण सम्बध्येत। स रामः शीतया ''शीतालाङ्गलपद्धतिः। शीङ् स्वप्ने। शेते सीता। औणादिकः क्तप्रत्ययः। तज्जत्वाज्जनकात्मजाऽपि शीता तयाऽऽभाति। दृष्टान्तश्चन्द्र इति'' इति नारायणविरचितदीपिकायाम्। अत्रेदं तत्त्वम्। राममन्त्रोद्धारप्रस्तावे पूर्वमन्त्रेण'र' इत्यग्निबी-जयुतेन चन्द्रो बिन्दुः संयुज्यते तदा जगद्वाचकं रामिति सिद्ध्यति। अवाङ्मनसगोचरं लोहित-बिन्दुं श्वेतबिन्दुं चेति मिश्रितं भाति जगद्रूपेणेति रहस्यं गुरुमुखादवगन्तव्यम्। तेन अग्निश्च सोमश्चेति व्युत्पत्त्या अग्नीषोमात्मकं जगद्भवति। नात्र दर्शपौर्णमासप्रकरणपठितयोरग्नीषोमयोः कश्चित् सम्बन्धः कल्प्यः। प्रकृतानुपयोगात्। तयोश्चोत्पत्तिप्रकारः प्रतिपाद्यते शतपथब्राह्मणे प्रथमकाण्डे दर्शपौर्णमासप्रकरणे। तत्र हि—''त्वष्टुर्वै पुत्रस्त्रिशीर्षा षडक्ष आस। तस्य त्रीण्येव मुखान्यासुः। तद्यदेवंरूप आस तस्माद् विश्वरूपो नाम। तस्य सोमपानमेवैकं मुखमास, सुरापानमेकम्, अन्यस्मा अशनायैकम्। तमिन्द्रो दिद्वेष—तस्य तानि शीर्षाणि प्रचिच्छेद। स यत् सोमपानमास ततः कपिञ्जलः समभवत्। तस्मात् स बभ्रुक इव। बभ्रुरिव हि सोमो राजा। अथ यत्सुरापाणमास ततः कलविङ्कः समभवत्। तस्मात् सोऽभिमाद्यत्क इव वदति। अभिमाद्यन्निव हि सुरां पीत्वा वदति अथ यदन्यस्मा अशनायास ततस्तित्तिरिः समभवत्। तस्मात्स विश्वरूपतम इव। सन्त्येव घृतस्तोका इव त्वत्, मधुस्तोका इव त्वत्। पर्णेष्वा-श्चुतिताः। एवंरूपमिव हि स तेनाशनमावयत्॥ स त्वष्टा चुक्रोध कुविन्मे पुत्रमवधीदिति। सोऽपेन्द्रमेव सोममाजह्रे। स यथायं सोमः प्रसुत, एव मयेन्द्र एवास। इन्द्रो ह वा ईक्षाञ्चक्रे—इदं वै मा सोमादन्तर्यन्तीति। स यथा बलीयानबलीयसः—एवमनुह्रूत एव—द्रोणकलशे शुक्र आस तं भक्षयाञ्चकार। स हैनं जिहिंस। सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव, मुखाद्धैवास्य न दुद्राव

**नारायणस्य निरूप्यमाणत्वादत्रापि "खं वायुर्ज्योतिरापः" इति श्रुत्याऽबा-दीनां नारायणादेव प्रादुर्भावस्य वक्ष्यमाणत्वाच्च न कोऽपि शङ्काकलङ्कानुगमः।**

---

सोऽग्निमेव प्राप्य सम्बभूव । अन्तरैव सम्बभूवेत्यु हैक आहुः । सोऽग्नीषोमावेवाभिसम्बभूव सर्वा विद्याः, सर्वं यशः, सर्वमन्नाद्यम्, सर्वां श्रीम् ।। स यद् वर्तमानः समभवत्, तस्माद्-वृत्रः, अथ यदपात्समभवत्तस्मादहिः । तं दनुश्च दनायुश्च मातेव च पितेव च परिजगृहतुः– तस्मात् दानव इत्याहुः । अथ यदब्रवीत इन्द्रशत्रुर्वर्धस्वेति तस्मादु हैनमिन्द्र एव जघान । अथ यद्ध शश्वदवक्ष्य इन्द्रस्य शत्रुर्वर्धस्वेति शश्वदु हस एवेन्द्रमहनिष्यत् । अथ यदब्रवीद्-वर्धस्वेति तस्मादु ह स्मेषुमात्रमेव तिर्यङ् वर्धते, इषुमात्रं प्राङ् । सोऽवैवावरं समुद्रं दधौ, अव पूर्वम् । स यावत् स आस, स हैव तावदन्नाद आस, तस्मै ह स्म पूर्वाह्णे देवा अशनम-भिहरन्ति, मध्यन्दिने मनुष्याः, अपराह्णे पितरः । स वा इन्द्रस्तथैव नुत्तश्चरन्नग्नीषोमावुपा-मन्त्रयाञ्चक्रे–अग्नीषोमौ युवं वै मम स्थो युवयोरहमस्मि, न युवयोरेष किञ्चन, कं म इमं दस्युं वर्धयथ । उप मावर्तेथामिति । तौ होचतुः किमावयोस्ततः स्यादिति । ताभ्यामेतम-ग्नीषोमीयमेकादशकपालं पुरोडाशं निरवपत । तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति ।। तावेनमुपाववृतुः तावनु सर्वे देवाः प्रेयुः, सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यम् सर्वाश्रीः । तेनेन्द्र इष्ट्वेन्द्र एतदभवत् यदिदमिन्द्रः । एष उ पौर्णमासस्य बन्धुः । स यो हैवं विद्वान् पौर्णमासेन यजते–एतां हैव श्रियं गच्छति, एवं यशो भवति एवमन्नादो भवति ।।" इत्यादिना अग्नीषोमयोर्देवतयोरुत्पत्तिस्तदुद्देश्यकैकादशकपालं पुरोडाशं चैतदैतिह्यानुकूलमा-हुस्तद्विदः । उपांशुयागविषयेऽपि तत्रैवैतिह्यम् । तथैवाज्यभागविषयेऽपि । तच्च द्रष्टव्यम् । एतावता दर्शपौर्णमासपठितयोरग्नीषोमयोर्न हि भवितुमर्हति मूलपुरुषत्वमिति विदाङ्कुर्वन्तु विद्वांसः । नचाग्निश्च सोमश्चेति विग्रहेऽपि अग्नितत्त्वस्य सोमतत्त्वस्य च मूलस्वरूपत्वं शङ्क्यम् । "मुखादिन्द्रश्चाग्निश्च" "चन्द्रमा मनसो जातः" इतिश्रुतिप्रामाण्यात्पुरुषोत्तमादेव तयोः प्रादु-र्भावः । तस्मात्सर्वथैव ब्रह्मण ईशानस्याग्नीषोमयोश्च न मूलपुरुषत्वमिति सद्भिराकलनीयम् । यत्तु ब्रह्मानन्दसरस्वत्यो लघुचन्द्रिकाख्यायामद्वैतसिद्धिटीकायां द्वितीयपरिच्छेदे ब्रह्मनिराकारत्वो-पपत्तिप्रकरणे "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवीत्यादि-महोपनिषदपि भूतभौतिकसकलकार्यस्रष्टृत्वादिकं नारायणशब्दितस्य मायावच्छिन्नचैतन्यस्यैव प्रतिपादयति" इत्याहुः, तन्न मञ्जुलम्, मायावच्छिन्नचैतन्यकर्तृकब्रह्मेशानादीनामपि मायिकत्वा-पत्तेः, शैवाद्यागमोदितषट्त्रिंशत्त्वाभेदेन तदुपासनया फलाभावापत्तेश्च । उपासनावाक्यानां प्रता-रकत्वापत्तेश्च । भवद्भिरप्यत्रैव "नमो नवघनश्यामकामकामितदेहिने । कमलाकामसौदामकण-

## साकारं ब्रह्म

**ननु "अस्थूलमनण्वह्रस्वमदीर्घमलोहितम्" "स पर्यगाच्छुक्रमकायमव्र-**

---

मायावच्छिन्नचैतन्यत्वे किं मानम् ? "यतो वा इमानि भूतानि जायन्ते" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "आनन्दाद्धेव खल्विमानि भूतानि जायन्ते" इत्यादिश्रुतिकदम्बेषु निरुपाधिकब्रह्मण एवाभिन्ननिमित्तोपादानकारणत्वं प्रतिपाद्यते, मायायाश्च "श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया। विद्ययाऽविद्यया शक्त्या मायया च निषेवितम्" इति भगवता बादरायणेनैव तच्छक्तित्वं प्रतिपाद्यते । नहि शक्तिः शक्तिमन्तमतिक्रामति । मायावच्छिन्नचैतन्यस्य कर्तृत्वपक्षाङ्गीकारे "एकेन विज्ञातेन सर्वमिदं विज्ञातं भवति" इतिश्रुतेः, "जन्माद्यस्य यतः शास्त्रयोनित्वात्" इति वैयासन्यायस्य च विरोधापातः । "एकमेवाद्वितीयं ब्रह्म" "नेह नानास्ति किञ्चन" "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिश्रुतिप्रतिपादिताद्वैतभङ्गश्च । "अनाद्यनिर्वचनीयत्वे सति विपर्ययोपादानभूता विक्षेपशक्तिप्रधाना माया" इति भवन्मते मायालक्षणात्स्वरूपविस्मारकत्वात्तस्याः, मायावच्छिन्नचैतन्यनमस्कारेणाज्ञानोत्पत्तौ त्वन्मतस्याप्यज्ञपरिकल्पितत्वात्तदुपेक्ष्यम् । अस्मदाचार्यचरणास्तु—'**मायेति भगवतः शक्तिः सर्वभवनसामर्थ्यरूपा**' इत्याहुः । मायाशब्दस्य लक्षणानि तद्भेदाश्चाग्रे वक्ष्यन्ते । **भगवानेव हि तन्नियामकः** । अतो नारायणस्य परब्रह्मत्वे नास्ति शङ्काकलङ्कानुगमः ।

मायावादिमतं निरसितमाहुः—**नन्वित्यादिना** । **अस्थूलमिति** । अस्थूलमनण्वह्रस्वमदीर्घम्" इत्यनेन परिमाणनिषेधः । अलोहितमित्यादिना तेजस्त्वादीनां निषेधः । नन्वत्र प्रसज्यप्रतिषेधपर्युदासाभ्यां कीदृशो नञर्थो ग्राह्यः ? आद्ये स्थूलापह्नुतिः, द्वितीये स्थूलादीनामक्षरादन्यत्वम् । नच पारमार्थिकस्य वस्तुनः स्थूलापह्नुतिर्न दोषाय इति वाच्यम् । अन्यत्राप्यभावनिष्ठो निषेधो न भवति किमुताक्षरे । लोके हि उत्सर्गविषये सत्यपवादो दृष्टः, निर्द्वये ब्रह्मणि कथं स्थूलादेरपवादो घटते? उत्सर्गापवादन्यायस्तु "न हिंस्यात्सर्वा भूतानि" इत्यादिना हिंसानिषेधः स औत्सर्गिको मार्गः, सामान्यतो विधिरित्यर्थः । ततश्चापवादेनोत्सर्गस्य बाधितत्वान्न श्रौतो हिंसाविधिर्दोषाय "उत्सर्गापवादयोरपवादविधिर्बलीयान्" इतिन्यायात् । अत्रोच्यते—प्रतीच्यज्ञाते प्राप्तं स्थूलादि तस्मिन्नेव ज्ञाते निषिध्यते दृश्यते च रज्ज्वामज्ञातायां प्राप्तस्य सर्पादेस्तस्यां निषेधस्तत्प्रसज्यप्रतिषेधः, साधीयान् । उत्सर्गापवादविधिनिषेधा एकत्रात्मनि अध्यस्तदिङ्निषेधश्च यथैकस्मिन् व्योम्नि तथा । अतो न प्रसज्यप्रतिषेधार्थग्रहणे कश्चिद्दोषः । तथैव नापि पर्युदासे दोषो विभावनीयः । अहेर्यद्वत्स्रग्याथात्म्यं तद्वदत्राप्यक्षर-

णम्'' इत्यादिश्रुतिवचनानां ब्रह्मण्याकारनिषेधकत्वात्कथं साकारत्वमिति

---

धारणान्न तत्र स्थूलादिनिषेधो धर्म्यभावात् । एवं चेत्तर्हि तस्याक्षरे कः प्रसङ्गो यतस्तत्प्रतिषिध्यते, अव्याकृत आकाशादावपि तदसम्भाव्यम्, किमुत प्रत्यगात्मनि ? अत्रापि श्रूयताम्- केचिद्ब्रह्मणः समस्तव्यस्ततां प्रतिजानते, अतस्तन्निषेधार्थं निषिद्धं सन्निषिध्यते । एवं आत्मयाथात्म्यज्ञानाग्निदृष्टान्तेऽपि-यदिदं सर्वं इत्यादिना स्थूलादीनां कारणे व्यक्तावस्था निरस्ता, तेषामेव शक्त्यवस्था कार्यकारणविलक्षणे अक्षरे निरस्या, तदर्थमेवास्थूलादिवाक्यप्रवृत्तिः । तथाच कार्यकारणनिषेधे सति प्रतीचिश्रुतं ब्रह्मादिपदं मुख्यार्थं स्यात्तदनिषेधे वस्तुपरिच्छेदाद्गौणार्थमेवाखण्डवस्तु-स्वात्मना अवस्थानाख्यो मोक्षश्च न सिद्ध्येत्ततो मोक्षशास्त्रबाधः स्यात् । अथवा निषेधपरत्वं परित्यज्य तत्त्वमादिवद्विधिमुखेन बोधकमस्थूलादिवाक्यं ग्राह्यम् । ओतप्रोतवाक्येन स्थूलादिनिषेधस्य सिद्धत्वात् । अस्थूलादिवाक्यानां निषेधपरत्वाभावे, तन्निषेधानुवादेन प्रतीचि ब्रह्म बोध्यत इत्यर्थो ग्राह्यः । एवंच-तन्निषेधस्य फलं स्फुरणं तदात्मना गम्यमानं स्वप्रकाशं 'त्वं'पदलक्ष्यमात्मानं उक्तविशेषणं ब्रह्मेति बोध्यम् । एवं सति सर्वेषां चोद्यानां न सम्भवः । नन्वति वाक्ये विधिमुखेन बोधकत्वं तु नेतिनेतीतिवत् सर्वापीह व्याख्याऽनुसन्धेया । स्थूलादिचतुष्टयेन द्रव्यमात्रव्यपाश्रयत्वात्परिमाणस्यात्रापि द्रव्यत्वनिषेधो बोध्यः । अक्षरे द्रव्यत्वनिषेधेगुणत्वादि प्राप्तिर्भविष्यतीत्यतोऽलोहितमित्यादिना तन्निषेधः । तन्निषेधे च विशेषान्तरमत्रानिषिद्धं भविष्यतीत्यत उक्तविशेषनिषेधानुक्तविशेषनिषेधोपलक्षणं बोध्यम् । ननु युगपदशेषनिषेधसम्भवाद्व्यर्थमनेकविशेषणोपादानमिति चेन्न, विशेषप्रतिषेधे तु क्रम आश्रीयते, वाचः क्रमवर्तित्वादपर्यायेण सर्वनिषेधासिद्धेः । निषेध्यक्रमाच्च निषेधक्रमोऽनुसर्तव्यः । विरोधिनिषेधानुपपत्त्या तद्विरोधिप्राप्तिस्ततश्च क्रमो निषेध्यानामेवादर्तव्यः । एवं च कृत्स्नकार्यनिषेधतः कारणप्रतिषेधेन पूर्णं तदक्षरं ज्ञेयम् । नच प्रतीचि स्थौल्यादिनिषेधात्तत्तन्निषेध्यविरुद्धानेकाकारत्वप्राप्तेरैकरस्यं न स्यादिति वाच्यम् । येन रूपेण स्थूलं वस्तु निषेधति, तेनैव रूपेण तस्याण्वादि निःशेषं निषिध्यते । तदेवाक्षरम् । यथा वह्न्याद्युक्तिः जठरकुहरवर्तित्वं काष्ठपृष्ठनिष्ठत्वं च बोधयति तथाक्षरमपि विरोधिना स्थूलाद्यपाक्रियां बोधयतीति नेह घटते निरुक्तवैधर्म्यदृष्टान्तात् । किं तदक्षरे सर्वविरोध्येकरूपं इति चेदुच्यते-यथैका क्रिया रूपतः प्रत्यक्कूटस्थरूपेण मानित्वादिनिषेधस्तथा सर्वनिषेधकृदक्षरं साधर्म्यदृष्टान्तात् । तेन नायं नारायणः साकार इति सिद्धम् ।

माादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि नार्थान्तरप्रधानानीत्येतत्प्रतिष्ठापितं "तत्तु समन्वयात्" इत्यत्र। तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम्। इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि। उपासनाविधिप्रधानानि हि तानि। तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम्। सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्तीति। एष विनिगमनायां हेतुः। येनोभयीष्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति ॥१४॥ का तर्ह्याकारवद्विषयाणां श्रुतीनां गतिः? इत्यत आह—"**प्रकाशवच्चावैयर्थ्यात्**" यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसम्बन्धात्तदाकारतामिव प्रतिपद्यते, तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते। एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति। न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तं प्रतिपत्तुम्, प्रमाणत्वाविशेषात्। नन्वेवमपि यत्पुरस्तात्प्रतिज्ञातं नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद्विरुध्यते। नेति ब्रूमः। उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम ॥ १५ ॥ "**आह च तन्मात्रम्**" आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म—"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति। एतदुक्तं भवति—नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपम्। यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैवेति ॥१६॥ "**दर्शयति चाथो अपि स्मर्यते**" दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म निर्विशेषत्वात्—"अथात आदेशो नेति नेति" इति "अन्यदेव तद्विदितादथो अविदितादधि" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्येवमाद्या। बाष्कलिना च बाध्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते—"सहोवाचाधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वं तु न विजानासि। उपशान्तोऽयमात्मा" इति। तथा स्मृतिष्वपि परनिषेधेनैवोपदिश्यते—"ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते। अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" इत्येवमाद्यासु। तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते—"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि" इति ॥ १७ ॥ "**अत एव चोपमा सूर्यकादिवत्**" यत एव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसा-

एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'' इत्येवमादिषु ॥१८॥ अत्र प्रत्यवस्थीयते–''**अम्बुवदग्रहणात्तु न तथात्वम्**'' न जलसूर्यकादितुल्यत्वमिहोपपद्यते; तद्वदग्रहणात् । सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते, तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः, न त्वात्मा मूर्तो न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः सर्वगतत्वात्सर्वानन्यत्वाच्च । तस्मादयुक्तोऽयं दृष्टान्त इति ॥ १९ ॥ अत्र प्रतिविधीयते—''**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्**'' युक्त एव त्वयं दृष्टान्तो विवक्षितांशसम्भवात् । न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित्कञ्चिद्विवक्षितांशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते । सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्, शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते । किं पुनरत्र विवक्षितं सारूप्यमिति ? तदुच्यते–वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्मानुयायि भवति न तु परमार्थतः सूर्यस्य तथात्वमस्ति । एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान्वृद्धिह्रासादीन् । एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः ॥ २० ॥ ''**दर्शनाच्च**'' दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वन्तरनुप्रवेशम्–''पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्'' इति । ''अनेन जीवेनात्मनानुप्रविश्य'' इति च । तस्माद्युक्तमेतत्–''अत एव चोपमा सूर्यकादिवत्'' इति तस्मान्निर्विकल्पकैकलिङ्गमेव ब्रह्म नोभयलिङ्गं विपरीतलिङ्गं चेति सिद्धम् ॥

अत्र केचित् द्वेऽधिकरणे कल्पयन्ति । प्रथमं तावत्–किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्मोत प्रपञ्चवदनेकाकारोपेतमिति । द्वितीयं तु–स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्मोत बोधलक्षणमुतोभयलक्षणमिति । अत्र वयं वदामः–सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति । यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासस्तत्पूर्वेणैव ''न स्थानतोऽपि'' इत्यनेनाधिकरणेन निराकृतमित्युत्तरमधिकरणं ''प्रकाशवच्च'' एतद्व्यर्थमेव भवेत् । न च सल्लक्षणमेव ब्रह्म न बोधलक्षणमिति शक्यं वक्तुम्; विज्ञानघन एवेत्यादिश्रुतिवैयर्थ्यप्रसङ्गात् कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत । नापि बोधलक्षणमेव ब्रह्म न सल्लक्षणमिति शक्यं वक्तुम् ''अस्तीत्येवोपलब्धव्यः'' इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात् । कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्यते । नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुम्, पूर्वाभ्युपगमविरोधप्रसङ्गात् सत्ताव्यावृत्तेन च बोधेन बोधव्यावृत्तया च

लक्षणमित्ययं विकल्पो निरालम्बन एव स्यात्। सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि। अपि च ब्रह्मविषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्नास्वनाकारे ब्रह्मणि परिगृहीतेऽवश्यं वक्तव्येतरासां श्रुतीनां गतिः। तादर्थ्येन प्रकाशवच्चेत्यादीनि सूत्राण्यर्थवन्तराणि सम्पद्यन्ते। यदप्याहुराकारवादिन्योऽपि श्रुतयः प्रपञ्चविलयमुखेनाकारप्रतिपत्त्यर्था एव न पृथगर्था इति, तदपि समीचीनमिव लक्ष्यते। कथम्? ये हि परविद्याधिकारे केचित्प्रपञ्चा उच्यन्ते, यथा—"युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयो यो वै दश च सहस्राणि बहूनि चानन्तानि च" इत्येवमादयस्ते भवन्ति प्रविलयार्थाः; "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" इत्युपसंहारात्। ये पुनरुपासनाविधानाधिकारे प्रपञ्चा उच्यन्ते, यथा "मनोमयः प्राणशरीरो भारूपः" इत्येवमादयो न तेषां प्रविलयार्थत्वं न्याय्यम्; "स क्रतुं कुर्वीत" इत्येवंजातीयकेन प्रकृतेनैवोपासनविधिना तेषां सम्बन्धात्। श्रुत्या चैवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्प्यमाने न लक्षणया प्रविलयार्थत्वमवकल्पते। सर्वेषां च साधारणे प्रविलयार्थत्वे सति "अरूपवदेव हि तत्प्रधानत्वात्" इति विनिगमनकारणवचनमनवकाशं स्यात्। फलमप्येषां यथोपदेशं क्वचिद्दुरितक्षयः क्वचिदैश्वर्यप्राप्तिः क्वचित्क्रममुक्तिरित्यवगम्यत एवेत्यतः पार्थगर्थ्यमेवोपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यं, नैकवाक्यत्वम्। कथं चैषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यम्। एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदिति चेत्, न; ब्रह्मवाक्येषु नियोगाभावात्। वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि न नियोगोपदेशीनीत्येतद्विस्तरेण प्रतिष्ठापितं "तत्तु समन्वयात्" इत्यत्र। किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यम्। पुरुषो हि नियुज्यमानः कुर्विति स्वव्यापारे कस्मिंश्चिन्नियुज्यते। ननु द्वैतप्रपञ्चविलयो नियोगविषयो भविष्यति। अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः। यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यत एवमपवर्गकामस्य प्रपञ्च प्रविलयः। यथा च तमसि व्यवस्थितं घटादितत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यत एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चो, न प्रपञ्चस्वभावं ब्रह्म, तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवतीति। अत्र वयं पृच्छामः—कोऽयं प्रपञ्चप्रविलयो नाम। किमग्निप्रतापसम्पर्काद्घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्य आहोस्विदेकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति। तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रवि-

ब्रह्म, तत्सत्यं स आत्मा तत्त्वमसि" इति तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते तया चाविद्या बाध्यते, ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत्प्रविलीयते। अनावेदिते तु ब्रह्मणि ब्रह्मविज्ञानं कुरु प्रपञ्चप्रविलयं चेति शतकृत्वोऽप्युक्ते, न ब्रह्मविज्ञानं प्रपञ्चप्रविलयो वा जायते। नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चविलयविषयो वा नियोगः स्यात्। न निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैवोभयसिद्धेः। रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानमविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति। नच कृतमेव पुनः क्रियते। नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम स प्रपञ्चपक्षस्यैव वा स्याद्ब्रह्मपक्षस्य वा। प्रथमे विकल्पे निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवज्जीवस्यापि प्रविलापितत्वात्कस्य प्रपञ्चविलये नियोग उच्येत कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत। द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभावं जीवस्य स्वरूपं, जीवत्वं त्वविद्यया कृतमेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावान्नियोगाभाव एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठितास्तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना भवन्ति। लोकेऽपीदं पश्येदमाकर्णयेति चैवंजातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते न साक्षाज्ज्ञानमेव कुर्विति। ज्ञेयाभिमुखस्यापि ज्ञानं कदाचिज्जायते कदाचिन्न जायते, तस्मात्तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन। तस्मिन्दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते। नच प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थेऽन्यथाज्ञानं नियुक्तस्याप्युपपद्यते। यदि पुनर्नियुक्तोऽहमित्यन्यथाज्ञानं कुर्यान्नतु तज्ज्ञानं किं तर्हि मानसी सा क्रिया। स्वयमेव चेदन्यथोत्पद्येत भ्रान्तिरेव स्यात्। ज्ञानं तु प्रमाणजन्यं यथाभूतविषयं च न तन्नियोगशतेनापि कारयितुं शक्यते। नच प्रतिषेधशतेनापि वारयितुं शक्यते। न हि तत् पुरुषतन्त्रं, वस्तुतन्त्रमेव हि तत्। अतोऽपि नियोगाभावः। किञ्चान्यन्नियोगनिष्ठतैव पर्यवस्यत्याम्नाये यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जीवस्य तदप्रमाणकमेव स्यात्। अथ शास्त्रमेवानियोज्यब्रह्मात्मत्वमप्याचक्षीत तदवबोधे च पुरुषं नियुञ्जीत ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरुद्धार्थपरता च प्रसज्येयाताम्। नियोगपरतायां च श्रुतहानिरश्रुतकल्पना कर्मफलवन्मोक्षस्यादृष्टफलत्वमनित्यत्वं चेत्येवमादयो दोषा न केनचित्परिहर्तुं शक्याः। तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि न नियोगनिष्ठानि। यतश्चैकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम्। अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु चासिद्धम्। न हि शब्दान्तरादिभिः प्रमाणैर्नियोगभेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुम्। प्रयाजदर्शपूर्णमासवाक्येषु त्वधिकारांशेनाभेदाद्युक्तमेकत्वम्। नत्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति। नहि भारूपत्वादयो गुणाः प्रपञ्चप्रवि-

**चेत्, न, श्रुतिषु लोकप्रतीतानामेवास्थूलादीनां निषेध्यतयोच्यमानत्वेनालौकिकस्यानन्दमात्रकरपादमुखोदराद्याकारस्य निषेधाविषयत्वात् । प्रत्युत "आनन्दो ब्रह्मेति व्यजानात्" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते"**

---

एवमेव "सपर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः" इतीशोपनिषच्छ्रुतेरपि ब्रह्मण आकारनिषेधः । तथाच श्रुत्यर्थः–स पर्यगात्स यथोक्त आत्मा पर्यगात्परि समन्तादगाद्गतवानाकाशवद्व्यापीत्यर्थः । शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थः । अकायमशरीरो लिङ्गशरीरवर्जित इत्यर्थः । अव्रणमक्षतम् । अस्नाविरं स्नानाः शिरा यस्मिन्नविद्यन्त इत्यस्नाविरम् । अव्रणमस्नाविरमित्येताभ्यां स्थूलशरीरप्रतिषेधः । शुद्धं निर्मलमविद्यामलरहितमिति कारणशरीरप्रतिषेधः । अपापविद्धं धर्माधर्मादिपापवर्जितम् । शुक्रमित्यादीनि वचांसि पुंलिङ्गत्वेन परिणेयानि स पर्यगादित्युपक्रम्य कविर्मनीषीत्यादिना पुंलिङ्गत्वेनोपसंहारात् । कविः क्रान्तदर्शी सर्वदृक् । "नान्योऽतोऽस्ति द्रष्टे"त्यादिश्रुतेः । मनीषी मनस ईशिता सर्वज्ञ ईश्वर इत्यर्थः । परिभूः सर्वेषां पर्युपरि भवतीति परिभूः । स्वयम्भूः स्वयमेव भवतीति स्वयम्भूः । स नित्यमुक्त ईश्वरो याथातथ्यतः सर्वज्ञत्वाद्यथातथाभावो याथातथ्यं तस्माद्यथाभूतकर्मफलसाधनतोऽर्थान्कर्तव्यपदार्थान्व्यदधाद्विहितवान्यथानुरूपं व्यभजदित्यर्थः । शाश्वतीभ्यो नित्याभ्यः सम्वत्सराभ्यः प्रजापतिभ्य इत्यर्थः । अत्राप्यकायमित्यादिना स्पष्टमेव साकारत्वप्रतिषेधः श्रूयते । तस्मान्निराकारमेव ब्रह्म न तत्र साकारताभ्युपगमः । एवं पूर्वपक्षमुपन्यस्य खण्डयन्ति—**इति चेन्ने**त्यादिना । "अस्थूलमनणु" इत्यादिना प्राकृतधर्माणामेव प्रतिषेधो नाप्राकृतानामित्यत आहुः—**लोकप्रतीतानामेवे**ति । अस्थूलादिवाक्येषु नञर्थस्योभयथापि ग्रहणे दोषाभावः प्राकृतधर्माणामेव निषेधात् । अत एव श्रीमत्पुरुषोत्तमचरणाः 'न स्थूलमस्थूलं स्थूलाद्भिन्नमिति पर्युदासगर्भोऽर्थः, न विद्यते स्थूलं यस्मिन्निति प्रसज्यप्रतिषेधगर्भो वार्थ' इत्याहुः । अस्थूलादिश्रुतिभिर्न ब्रह्मणि सर्वथा धर्माभावो बोध्यते । अन्यथा "सर्वकामः सर्वरसः सर्वगन्धः" "सहस्रशीर्षा पुरुषः" "विश्वतश्चक्षुः" "एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "आदित्यवर्णं तमसः परस्तात्" "यदा पश्यः पश्यते रुक्मवर्णम्" "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्" "पादोऽस्य विश्वाभूतानि" "पश्य मे पार्थ रूपाणि" "सर्वतः पाणिपादं तत्" "अन्तस्तद्धर्मोपदेशात्" सर्वोपेता च तद्दर्शनात्" "श्रुतेस्तु शब्दमूलत्वात्" "देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण" इत्यादिश्रुतिस्मृतिन्यायविरोधो गीर्वाणगुरुणाऽपि दुष्परिहार्यो

**"आनन्दमयोऽभ्यासात्" "प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः" इत्यादिश्रुतिवैयासन्यायैरप्राकृताकारस्य साधितत्वाच्च । मयैतद्विशदतया प्रपञ्चितं गोपालतापिनीभाष्ये तट्टीकायां चेति नात्र विस्तरः ।**

---

नचाकारनिरूपिकाः श्रुतयः सोपाधिब्रह्मपरा इति वाच्यम् । ब्रह्मणः सोपाधिकं निरुपाधिकं चेति रूपद्वयं नास्त्येव, विनिगमनाविरहात् । "एकमेवाद्वितीयं ब्रह्म" "अयमेव स योऽयम्" "नेह नानास्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "एक एवात्मा मन्तव्यः" "न भेदादिति चेन्न प्रत्येकमतद्वचनात्" "अपि चैवमेके" इत्यादि श्रुतिन्यायव्याकोपाच्च । किञ्च, धर्मबोधिकाः श्रुतयोऽनन्ताः, ताः सर्वा अपि सोपाधिब्रह्मप्रतिपादिका भवेयुस्तदा भूयान् वेदभागो ब्रह्मवर्णनतो वञ्चितो भवेत् । तदा "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्य" इत्यादि श्रुतिस्मृतिव्याकोपः । "अथातो ब्रह्मजिज्ञासा" इत्यत्र किं सोपाधिकस्य ब्रह्मणो विचारः प्रतिज्ञातः, निरुपाधिकस्य वा ? नाद्यः, उपाधेर्मिथ्यात्वात्तद्विशिष्टस्य ब्रह्मणोऽपि मिथ्यात्वापत्तेः । "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतिप्रतिपादितस्य ब्रह्मणः सत्यत्वव्याकोपाच्च । निरुपाधिकस्य चेत्सर्वाण्यपि धर्मबोधकानि वाक्यानि निरुपाधिकपरात्परब्रह्मपराण्येवेति मन्तव्यम् । सोपाधिकस्य निरुपाधिकस्य चेत्युभयरूपस्यापि ब्रह्मण इत्यपि न वाच्यम् । विनिगमनाविरहात् । उपाधिपक्षस्य श्रुतिसूत्रविरुद्धत्वं त्वग्रे वक्ष्यते । ननु विशेषाणामविद्याकल्पितत्वात् न तादृशवाक्यानां परब्रह्मपरत्वम्, इति चेदुच्यते ? भवता विशेषाणामविद्याकल्पितत्वं यदुच्यते— का साऽविद्या ? जीवगता ब्रह्मगता वा ? नाद्या, जीवगताया अविद्याया ब्रह्मगतधर्मकल्पने सामर्थ्याभावात् । धर्मकल्पनं हि शुद्धब्रह्मणि, तस्य च मनोवागगोचरत्वात्, अधिष्ठानज्ञानाभावाज्जीवस्य, तर्हि तस्याः सम्बन्धो दूरतरः । तथाहि शुक्तिकारजतादिस्थले विषयावरकमज्ञानं चेतद्रजतकल्पकं स्यात्, तदा सर्वान् प्रति स्यात्, साधारणत्वात् । तथा सत्यदृष्टरजतस्यापि तत्र रजताध्यासः स्यात्, कस्यचिद्विशेषदर्शनदशायां तदभिभवे तस्य सर्वान्प्रत्यभिभूतत्वाद्विशेषदर्शनाभाववतोऽपि रजताध्यासनिवृत्तिश्च स्यात् । अतो विषयावरकमज्ञानं यथा तत्र न रजतकल्पकमेवं ब्रह्मावरकाज्ञानमपि । अतः परं तत्रेवात्रापि जीवावरकाज्ञानं तत्कल्पकमित्यवशिष्यते । तच्च विषयेण सम्बध्यमानमेव कल्पकम् । अन्यथा शुक्त्यदर्शनेऽपि कल्पयेत् । सम्बन्धश्च तस्य मनोद्वारक एव, मनो यदेन्द्रियेण संसृज्यते तदैव बाह्यज्ञानोदयात् । "यतो वाचो निवर्तन्ते" इतिश्रुत्या च मनःसंसर्गे निवारिते द्वाराभावाज्जीवावरकलिङ्गशरीरनिष्ठायास्तस्याः सम्बन्धस्तथेत्यर्थः । न द्वितीया, ब्रह्मणो नित्यशुद्धमुक्तस्वभावात् तस्मिन् त्वन्मते त्वविद्याया अभाव एव । न च ब्रह्मण एकरसत्वेन विशेषाणां च सर्वरस-

---

न्द्रियविवर्जितम् । असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च" इत्यादिना भगवतैव स्वस्वरूपं प्रतिपादितम् । सर्वेषामपि रूपाणां नित्यत्वात् । ब्रह्मणो विरुद्धधर्माश्रयत्वात् । ब्रह्मणोऽप्राकृतरूपवत्त्वं तु गीतास्मृतौ "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम्" इत्यनेन प्राकृतधर्मनिषेधमुक्त्वा "महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्" इत्यनेन बोध्यते । "अपाणिपादो जवनो ग्रहीता" इत्यत्रापि विरुद्धधर्माधारकत्वं श्रुतम् । अतो नास्ति सविशेषश्रुतीनां निर्विशेषश्रुतीनां च कश्चिद्विरोधः । न वा सविशेषश्रुतीनां बाधो निर्विशेषश्रुतिभिः क्रियत इति वाच्यम् । आमिक्षाधिकरणन्यायविरोधात् । तदेतद्विशदतया प्रपञ्चितं विद्वन्मण्डने श्रीमत्प्रभुचरणैः, श्रीमत्पुरुषोत्तमपादैश्च सुवर्णसूत्रे भाष्यप्रकाशे च, योगिगोपेश्वरचरणैरपि रश्मिभक्तिमार्तण्डादिषु । अतोऽत्र नेह तन्यते ।

ननु पूर्वं व्याससूत्रैर्निराकारत्वं प्रतिपादितमेव तर्हि कुतो व्याससूत्राण्यनादृत्य साकारत्वमुच्यते, इति चेत्, मैवं वादीः; नहि व्याससूत्राणामयमाशयः । तथाहि—"**अरूपवदेव हि तत्प्रधानत्वात्**" "अस्थूलमनण्वह्रस्वमदीर्घम्" "अशब्दमस्पर्शमरूपमव्ययम्" "आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः" "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" इत्येवमादीनि वाक्यान्येव पूर्वं व्याख्यायन्ते—तत्रा**स्थूलमिति श्रुतेः** प्राकृतधर्मरहितं ब्रह्मेत्यर्थः पूर्वमेव प्रतिपादितः । अशब्दमित्यस्यापि शब्दादिप्राकृततन्मात्रारहितमित्यर्थः । न विद्यते शब्दो भूताकाशवृत्तिर्यस्मिंस्तदिति व्युत्पत्त्या शब्दादिरहितत्वं ब्रह्मणि सम्भवति । "**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते**" इति हि सम्पूर्णा श्रुतिः । अत्र हि शब्दस्पर्शरूपरसगन्धेति पञ्चानामपि तन्मात्राणां निषेधः श्रूयते । अव्ययं, नित्यं, अनाद्यनन्तं, महतश्च परं यदलौकिकं ब्रह्म तस्मिञ्च्छब्दादीनां प्राकृतधर्माणां राहित्यं सूच्यते । न चात्रालौकिकधर्माणामपि निषेधो वाच्यः, "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" "ईक्षतेर्नाशब्दम्" "शब्दादेव प्रमितः" "श्रुतेस्तु शब्दमूलत्वात्" "वेदो नारायणः साक्षात्" इत्यादिश्रुतिस्मृतिसूत्रसमाधिभाषासु वेदस्यालौकिकशब्दराशेर्ब्रह्मत्वं स्पष्टमेव प्रतिपाद्यते । शब्दब्रह्मणो लोकभिन्नत्वं तु पूर्वोत्तरतन्त्रप्रसिद्धम् । अत एव "अलौकिको हि वेदार्थो न

लाभूताया अहल्याया उद्धारो भगवत्पादस्पर्शेनैवेति सुप्रसिद्धमेव। व्रजभक्ता अपि "यर्ह्य-म्बुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य। अस्प्राक्ष्म तत्प्रभृति नान्य-समक्षमञ्जः स्थातुं त्वयाऽभिरमिता बत पारयामः" नागपत्न्योऽपि "तवाङ्घ्रिरेणुस्पर्शाधिकारः यद्वाञ्छया" इत्यूचुः। भगवच्चरणस्पर्शस्य फलस्थानीयत्वात्। अतो नात्र श्रुतौ अलौकिक-स्पर्शनिषेधः, किन्तु लौकिकस्पर्शाभाव एव। रुद्रादिभिरपि भगवद्विग्रहस्पर्शो याचित इति कृष्णोपनिषदि श्रूयते, तथाहि–"तं होचुर्नोऽवद्यमवतारान्वै गण्यन्ते आलिङ्गामो भवन्त-मिति। भवान्तरे कृष्णावतारे यूयं गोपिका भूत्वा मामालिङ्गथ। अन्ये येऽवतारास्ते हि गोपान्नः स्त्रीश्च नो कुरु। अन्योन्यविग्रहं धार्यं तवाङ्गस्पर्शनादिह। शश्वत्स्पर्शयिताऽस्माकं गृह्णी-मोऽवतारान्वयम्। रुद्रादीनां वचः श्रुत्वा प्रोवाच भगवान्स्वयम्। अङ्गसङ्गं करिष्यामि भवद्वाक्यं करोम्यहम्। मोदितास्ते सुराः सर्वे कृतकृत्याऽधुना वयम्।" इति। अलौकिक-रूपं तु "भद्रं पश्येमाक्षिभिः" इत्यत्र प्रतिपादितमेव "त्रुटिर्युगायते त्वामपश्यताम्" इत्या-दिषु भगवद्दर्शनं फलरूपमिति सिद्धम्। श्रुतावपि "आत्मा वा अरे द्रष्टव्यः" इत्यत्र अलौकि-करूपवतो भगवतो दृग्विषयत्वं प्रतिपाद्यते। तदपि नहि द्रष्टुं चर्मचक्षुभिः शक्यमिति "दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" इति भगवता कृपया दिव्यचक्षुःप्रदानेन रूप-मैश्वरं दर्शितम्। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः, क्षीयन्ते चास्य कर्माणि तस्मि-न्दृष्टे परावरे" इत्यादिना भगवद्दर्शनेन सर्वकर्मक्षयः प्रतिपाद्यते। सर्वसंशयानां छेदनं हृदय-ग्रन्थेर्भेदनं रागद्वेषादीनां ग्रन्थिवद्दुर्मुचां भेदनं मोक्षः। न च "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति छान्दोग्यश्रुतेः, शरीरवियोगकाल एव पुण्यपापाख्यकर्मविनाशः श्रूयते इति वाच्यम्। तस्मि-न्दृष्टे परावरे इत्यनेन भगवद्दर्शनेन शरीरवियोगात्प्रागेव कर्मक्षयः। न च "नाभुक्तः क्षीयते कर्म कल्पकोटिशतैरपि" इति वाक्याद्भोगादेव कर्मक्षय इति वाच्यम्। तद्वाक्यस्य विष्णु-भक्तेतरपरत्वात्। "जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम्। कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान्" इति यमवा-क्यात्। ननु शङ्कराचार्यैः "तस्मिन्दृष्टे परावरे" इत्यस्य परमात्मज्ञानमित्यर्थः क्रियते न तु भगवद्दर्शनम्। तथा च मुण्डकोपनिषद्भाष्येऽपि "अस्य परमात्मज्ञानस्य फलमिदमभिधीयते" इत्युक्तं तेन नास्याः श्रुतेर्भगवद्दर्शनमर्थः, किन्तु परमात्मज्ञानमेव। तदविचारचारु–"दृशिर् प्रेक्षणे' इति धातोर्निष्ठायां भगवद्दर्शने कृते सतीत्येवार्थः साधीयान्। प्रेक्षणं हि चाक्षुषं प्रत्य-क्षम्। अग्रे चास्यामेव मुण्डकोपनिषदि "ज्योतिषां ज्योतिः" "तस्य भासा सर्वमिदं विभाति"

"रस९ ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिश्रुतिव्याकोपः । भगवतो रसरूपत्वं तु भाष्यसुबोधिन्यादिषु विस्तृतं विवेचितं श्रीमन्महाप्रभुपूज्यपादैस्तद्वंशजैस्तदनुयायिभिश्च, अतो नेह तन्यते । अगन्धमित्यत्रापि प्राकृतगन्धराहित्यं बोध्यम् । "सर्वकामः सर्वगन्धः सर्वरसः" इतिश्रुतेः ।

**"आकाशो वै नाम रूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृत९ स आत्मा"** इति सम्पूर्णा श्रुतिः । तदर्थस्तु नामरूपयोः निर्वहिता तयोरविच्छेदेन चालको व्याकर्ता आकाशो वै निश्चयेन तद् ब्रह्म । ते नामरूपे यदन्तरा यदन्तःस्थिते वर्तेते तद्ब्रह्म, तदमृतम्, स आत्मेत्यर्थः । केचित्तु, यद् ब्रह्म, ते नामरूपे, अन्तरा विना; तथाच अनामरूपमित्यर्थमाहुः, तन्न; ते यदन्तरेत्यनेन नामरूपयोरन्तःस्थानमुक्तमतो नामरूपवद्ब्रह्मेत्यर्थ एव प्रशस्यतरः । ब्रह्मणश्चाप्राकृतनामरूपवत्त्वं प्रसिद्धम् । अत एव श्रीमदाचार्यचरणाः "नामरूपविभेदेन क्रीडति, नामरूपविभेदेन यो जगत्, नामरूपविभेदेन यतो जगत्" इत्याहुः । अत्रापि श्रुतौ नामरूपयोर्निर्वोढृत्वं विभाजकत्वं ब्रह्मणः कार्यमित्युच्यते । एतदेव समन्वयतृतीयपादे द्वादशाधिकरणे स्पष्टमाज्ञाप्यते व्यासपादैः **"आकाशोऽर्थान्तरत्वादिव्यपदेशात्"** इत्यत्र । अत्राकाशशब्दे सन्देहः, भूताकाशः परमात्मा वेति । नामरूपनिर्वाहमात्रत्वमवकाशदानाद्भूताकाशस्यापि भवतीति न ब्रह्मपरत्वम्, अन्यस्य नियामकस्याभावादेवं प्राप्ते—आकाशः परमात्मैव, कुतः, अर्थान्तरादिव्यपदेशात् । अर्थः प्रयोजनं यद्भूताकाशस्य श्रुतिसिद्धं वायुजननरूपं तस्मादन्यदर्थान्तरं, ते यदन्तरेत्यादिनोक्तम् । आसमन्तान्नामरूपयोरन्तःस्थापनम् । आदिपदेन तद्ब्रह्मेत्यादिना बोधितं तत्पोषकत्वं तयोरानन्ददायकत्वं तदात्मत्वं च बोध्यम् । तेन अन्तरः अर्थो यस्मादित्यर्थान्तरम्, "वाऽऽहिताग्न्यादिषु" इति पूर्वनिपातः । तस्य भावोऽर्थान्तरत्वम् । तदादयः । पूर्वोक्ता धर्मा ब्रह्मादिश्रुतयश्च तेषां व्यपदेशात् कथनात् इति सौत्रार्थः । न चेदमसङ्कुचितं नामरूपनिर्वोढृत्वं निरूढस्य रूपान्तर्गतस्याकाशस्य सम्भवति, न वा क्वापि श्रुतावाकाशमाहात्म्यहेतुत्वेनोक्तमस्ति । नाप्यसङ्कुचितं तयोरन्तःस्थापनं बृंहणं वा तथा । अत आकाशकार्यातिरिक्तकार्यकर्तृत्वादेरत्रोक्तत्वाद्ब्रह्मादिश्रुतीनां चानुकूल्याद्ब्रह्मैवाकाशः । स्वारसिकं च शब्दानां ब्रह्मवाचकत्वम्, अतो न लक्षणादोषः । यदपि लोकदृष्ट्याऽऽकाशस्यावकाशदानान्नामरूपनिर्वाहकत्वं तदपि भगवदधीनम् । "अदो ददाति श्वसतां पदं यन्नियमान्नभः" इति श्रीभागवतवाक्यात् । न वोपासनार्थं वक्तुं शक्यम् । वैपदविरोधात् । तस्माद्ब्रह्मधर्म एवाऽयम् । एवंच नामरूपनिर्वोढृत्वरूपोऽलौकिकधर्मोऽनया श्रुत्या प्रतिपाद्यत इति ध्येयम् ।

प्राकृताकाररहितः, दिव्याकृतिमत्त्वात् । पुरुषः पुरि शेतेऽसाविति पुरुषः सर्वव्यापकः पुमान् । स लोकवेदप्रसिद्धः । बाह्याभ्यन्तरः "व्यस्तभ्ना रोदसी विष्णवे ते दाधर्थ पृथिवीमभितो मयूखैः" "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति श्रुतिगीतादिवाक्यैः सदंशेन प्रपञ्चे व्यापकत्वाद्बाह्यः । आभ्यन्तरः सर्वगुहाशयः "यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष आत्मान्तर्याम्यमृतः" इत्याद्यन्तर्यामिब्राह्मणश्रुतेः । अजः, उत्पत्तिविनाशरहितः । ननु गोपालकृष्णादीनां जन्मादिश्रवणात्कथं तद्रहितत्वमिति चेन्न, लीलापरत्वात् । भागवते "न ते भवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे" "आविवेशांशभागेन मन आनकदुन्दुभेः" इति वाक्याभ्यां तस्य विनोदमात्रत्वमुक्त्वा रेतोद्वारा प्रादुर्भावस्य निवारितत्वाच्च । इदमत्र ज्ञेयम्—'अनित्ये जननं नित्ये परिच्छिन्ने समागमः । नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा" इति वाक्यान्नित्यापरिच्छिन्नस्य प्राकट्यमेव न तु जननम् । अतोऽवतारः कथ्यते । अवतरणं प्राकट्यम्, तच्च तावन्मात्रमायां दूरीकृत्य स्वयं प्रकटीभावः । अथवा व्यापिवैकुण्ठादत्र भक्तोद्धारार्थमवतरणं वा । अत एव "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन" इति गीतायां तयोरलौकिकत्वेन ज्ञातॄणां स्वप्राप्तिमुक्त्वा, "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम्" इति वाक्येन तत्र मानुषदृशां मूढत्वस्य भगवतैव व्यक्तीकृतत्वात् । अप्राणः, दशविधप्राणरहितः । दिव्याकृतौ प्राकृतानां तेषां निवेशासम्भवात् । प्राणानां हि "यः प्राणेषु तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरम्, यः प्राणमन्तरो यमयति" इति श्रुत्या नियामकत्वाच्च । अमनाः सङ्कल्पविकल्पात्मक मनोरहितः, तत्र तस्याप्यानन्दमयत्वात् । मनसोऽपि "यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरम्, यो मनोऽन्तरो यमयति" इति श्रुत्या नियामकत्वाच्च । शुभ्रः स्वच्छः, मलविक्षेपाज्ञानादिदोषरहितः, आनन्दमात्रकरपादमुखोदरादित्वात् । अक्षरात्परतः परः, क्षरात्परतोऽक्षरात्परः पुरुषोत्तमः "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति गीतावाक्यात् । अथवाऽक्षरात्परो हि नित्यलीलोपकरणस्तोमस्ततोऽपि परः श्रेष्ठ इत्यर्थः ।" इत्याहुः । अत्रापि भगवतोऽप्राकृतदिव्याकृतित्वं स्पष्टमेव । न चामूर्तपदेनाकारनिषेधः शङ्क्यः । पुरुषपदेनाकारस्यैव प्रतिपादितत्वात् ।

"तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" इति मधुब्राह्मणोपसंहारश्रु-

---

युक्ताः गोविन्दं स्वविषयान्प्रति हरन्तीति हरयः इन्द्रियाणि, शता शतानि, नित्यलीलास्थभक्तेन्द्रियाभिप्रायेण दशप्राणाः प्राणानामिन्द्रियपदवाच्यत्वात्; अयं परमात्मा, वै निश्चयेन हरय इन्द्रियाणि, ब्रह्मणः सर्वरूपत्वात्; दश प्राणापानव्यानसमानोदाननागकूर्मकृकलदेवदत्तधनञ्जयभेदात्, "दशेमे प्राणा" इति बृहदारण्यकीयश्रुतेश्च; सहस्राणि, "अस्मिन् सहस्रं पुष्यासम्" इति श्रुतेः, बहूनि, अनन्तानि हरिशब्दशब्दितानीन्द्रियाणि प्राणिबाहुल्यात् । तदेतद्ब्रह्म अपूर्वं यस्य कारणान्तरं नास्तीत्येवं रूपं, अनपरं यस्मादपरं किञ्चिन्नास्तीति सर्वस्य जगतो ब्रह्मरूपत्वात्, अनन्तरं, "यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा, अन्तर्बहिश्च यत्सर्वं व्याप्य नारायणस्थितः" इति श्रुतेः, अबाह्यम् सर्वान्तरत्वात् । सर्वान्तरत्वं हि अन्तस्तद्धर्मोपदेशादित्यधिकरणे अन्तर्याम्यधिदैवादिषु इत्यत्र च प्रसिद्धमेव । सर्वानुभूः सर्वमनुभवतीति सर्वानुभूः । अत्ता चराचरग्रहणात् इत्यत्र ब्रह्मणः सर्वानुभवयोग्यत्वं स्पष्टमेव । इत्यनुशासनमित्याज्ञा ।

न च तदेतद्ब्रह्मेति पूर्वेभ्यः "अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्" इत्यादिचतुर्दशपर्यायेभ्यो भिन्नं वाक्यमिति वाच्यम् । तच्छब्दात्पूर्वपरामर्शाद्विभागे साकाङ्क्षतया तदभावात् । तथा हि पूर्वतन्त्रे "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इत्यत्र भाट्टमतानुसारेण यावत्सु पदेषु वाक्यत्वं पर्याप्तं तावत्सु पर्याप्तं न तु वाक्यसमूहे, तस्य विनियोगानर्हत्वात् । वाक्यत्वं च यावत्स्वर्थैकत्वं विभज्यमानसाकाङ्क्षत्वं च तावत्सु । अर्थैकत्वं च भिन्नप्रतीतिविषयानेकमुख्यविषयराहित्यम्; अन्यस्य दुर्वचत्वात् । अस्ति च गामानयेत्यादौ मुख्यविशेष्यभूताया **भावनाया** एकत्वात्तत् । दर्शपूर्णमासामनहोमादिवाक्येषु च भावनानामनेकासामपि भिन्नप्रतीतिविषयत्वाभावात् । व्रीहियववाक्ययोः "भगो वां विभजतु" इत्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्याया भावनाया एकत्वादर्थैकत्वम् । अतस्तत्रैकवाक्यत्वव्यावृत्त्यर्थं द्वितीयमन्वीयमानयोः पदार्थयोरनन्वये अनिवृत्ताकाङ्क्षत्वरूपं विशेषणम्, "स्योनं ते सदनं कृणोमि तस्मिन् सीद" इत्यत्रान्वये साकाङ्क्षत्वेऽपि भिन्नवाक्यत्वादाद्यं विशेषणम्, इति जैमिनीयानुशासनेनैकवाक्यत्वे भिन्नवाक्यत्वाभावात् । न चेदं तच्छब्देन पूर्वोक्तरूपत्वं परामृशदप्यपूर्वमित्यनेन तन्निषेधतीति न दोष इति वाच्यम् । एवं तर्ह्यनपरमित्यनेनानन्तरत्वादीनग्रिमानपि निषेधच्छून्यवादमेव प्रसञ्जयेत् । अतोत्र पूर्वत्वादीनां धर्माणामेव निषेध इत्यङ्गीकार्यम् । तथा सति "न शुष्केण न चार्द्रेण जहार नमुचेः शिरः" इत्यत्र यथोभयात्मकस्य फेनस्याशुष्कत्वमनार्द्रत्वम्, एवमत्राप्येकैकतन्निषेधेन सर्वात्मकमेव बोध्यत इत्येव युक्तम् । अत एव गजेन्द्रस्तुतौ "स वै न देवासुरमर्त्यतिर्यङ् न स्त्री

शेषस्य निखिलात्मकत्वं बोधितम् । तथात्राप्यन्ते सर्वानुभूरिति श्राव्यते । सर्वसत्त्व एव सर्वानुभवितृत्वसम्भवात् । न चेदं प्रलये न सम्भवतीति वाच्यम् । को नाम प्रलयः ? ध्वंसो वा प्रतिसञ्चरो वा ? नाद्यः, असत्कार्यवादप्रसङ्गात् । अन्त्यश्चेत्, अस्मदाद्यगोचरत्वेऽपि सर्वं ब्रह्मगोचरमस्त्येवेति नासम्भवः । वस्तुतस्तु अखण्डब्रह्मवादे अस्मदाद्यगोचरत्वमेव प्रलयः । "तस्माद्वा एतस्मात्" इति क्रमेण वा "स आत्मानꣳस्वयमकुरुत"—इति युगपद्वा तद्गोचरत्वमेव, सृष्टिरितीच्छया समर्थनान्न कश्चिद्दोषः । एवं अस्थूलमित्यारभ्य सर्वानुभूरित्यन्ताः श्रुतयो व्याख्याताः । तत्र नैकेनापि पदेन निराकारं ब्रह्मेत्यर्थः स्फुटति, किन्तु प्राकृताकाररहितं "आनन्दमात्रकरपादमुखोदरादिः" इत्यलौकिकाकार एवाभिः श्रुतिभिः प्रतिपाद्यत इति निर्मत्सराणां विदुषां नाप्रत्यक्षम् । अलौकिकारत्वं तु ब्रह्मणो न दूषणाय, प्रत्युत भूषणायैव । "तत्तु समन्वयात्" इत्यत्रोक्तं शाङ्करमतं श्रीमद्वाक्पतिभिर्भाष्ये पण्डितपुरन्दरैश्च प्रकाशे, अवतारवादावल्यां च सहस्रशः खण्डितमिति नात्र विस्तरः । प्रकृतमनुसरामः ।

अस्थूलादिश्रुतीनां व्याख्यानेन "**रूपाद्याकाररहित**"मित्यारभ्य "**निराकारमेव ब्रह्मावधारितव्यम्**" इत्यन्ताः शाङ्करभाष्यस्थाः पङ्क्तयो दत्तोत्तरा वेदितव्याः । अतः परमग्रिमं विचार्यते । "**इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि । उपासनाविधिप्रधानानि हि तानि । तेष्वसति विरोधे यथा श्रुतमेवाश्रयितव्यम् । सति तु विरोधे तत्प्रधान्यतत्प्रधानेभ्यो बलीयांसि भवन्तीति । एष विनिगमनायां हेतुः । येनोभयीष्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते न पुनर्विपरीतमिति**" वाक्यानीमान्यपि न वेदान्ततात्पर्यबोधकानि । तथाहि—यदत्र "तत्परातत्परविरोधे तत्परं बलवत्" इति न्यायमुपक्षिप्य श्रुतिषु विरोधः प्रदर्श्यते, तदसङ्गतम् । नात्रैका श्रुतिः प्रधानाऽन्याऽप्रधानेति । सर्वासां निराकारसाकारप्रतिपादिकानां श्रुतीनां ब्रह्मपरत्वात् । आकारप्रतिपादिकाः श्रुतय उपासनाविधिप्रधानाः सोपाधिकं ब्रह्म प्रतिपादयन्तीत्यपि मुधा, एकस्यैव स्वतन्त्रस्य ब्रह्मणः सोपाधिकनिरुपाधिकभेदाभावात्, उपाधिपक्षस्य अशास्त्रीयत्वाच्च । अतो चैका प्रधानेतराऽत्राप्रधाना, तयोः प्रधाना बलवत्यन्या निर्बलेत्येवम्विधा कल्पना परिहृता बोध्या । नात्र तार्तीयो दाशमिको वा न्यायः । उभयविधास्वपि श्रुतिषु गुणप्रधानत्वाभावाद्बाध्यबाधकताभावाच्चेति दिक् ।

एवमेव "**प्रकाशवच्चावैयर्थ्यात्**" इत्यत्रापि निरुपाधिकस्यैव ब्रह्मणोऽङ्गीकारान्न घटते त्वदुक्तः पक्षः । उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्" इति युक्तिरपि "विद्याऽविद्ये मम तन विद्ध्युद्धव शरीरिणाम. बन्धमोक्षकरी आद्ये माययैव विनिर्मिते" इति श्रीमत्तरी-

भवितुमर्हति । अतो निरुपाधिकमेव साकारं ब्रह्म स्वीकर्तव्यम् । न च निरुपाधिकस्य निराकारत्वं वाच्यम् । "आनन्दरूपममृतं यद्विभाति" इति मुण्डके, "अकारं ब्रह्माणं नाभौ, उकारं विष्णुं हृदये, मकारं रुद्रं भ्रूमध्ये, ॐकारं सर्वेश्वरं द्वादशान्ते आनन्दामृतरूपं प्रणवं षोडशान्तम्" इति तापनीये, "आनन्दमात्रकरपादमुखोदरादिः" इति पञ्चरात्रस्मृतौ "अथवा परमात्मानं परमानन्दविग्रहम्" इति याज्ञवल्क्यस्मृतौ च आनन्दाकारस्यैव सिद्धत्वाच्च । अस्मिन् सूत्रे प्रकाशवदिति न मतुप्, किन्तु तृतीयान्ताद्वतिः । पूर्वसूत्रादेकदेशभूतमपि तत्पदमनुवर्तते । तद्ब्रह्म प्रकाशेन तुल्यम् । यथा प्रकाशो व्यवहार्योऽव्यवहार्यश्च, न हि स्वतः सम्पादयितुं शक्यते स्थापयितुं वा । आगन्तुके तु सूर्ये मेघाद्यभावे च सान्निध्यमात्रेण व्यवहारः कर्तुं शक्यते । तथा लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुम् । ईश्वरसन्निधाने तु शक्यत इति द्वयमाहुः—"मनसैतदाप्तव्यम्", "तं त्वौपनिषदं पुरुषं पृच्छामि" यतो वाचो निवर्तन्ते" इत्यादिश्रुतयः । अन्यथा शास्त्रं व्यर्थं स्यात् । सूत्रस्थचकाराद्धर्माणां तथात्वविरोधः परिहृतः । "आसीनो दूरं व्रजति," "अपाणिपादो जवनो ग्रहीता", इत्यादौ भगवद्धर्मा अलौकिका एवोच्यन्ते । अकारणककार्यकवचनाद्ब्रह्मधर्माणां चाकार्यत्वं बोधयति । तस्मान्न शास्त्रवैयर्थ्यम् ।

**"आह च तन्मात्रम्"** इत्यत्रापि "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मा कृत्स्नः प्रज्ञानघन एव" इति बृहदारण्यकीयश्रुत्या विलक्षणरूपान्तररहितत्वं साध्यते, तदप्ययुक्तम् । विलक्षणरूपं तु ब्रह्मणो भूषणायैव । श्रुत्यर्थस्तु—यथा सैन्धवघनः लवणपिण्डः अनन्तरोऽबाह्यः बहिरन्तश्च रसघनः तथा स आत्मा अनन्तरोऽबाह्यः बहिरन्तश्च सर्वत्र कृत्स्नोऽपि प्रज्ञानघन एव । तथा च कृत्स्नस्य घनत्वोक्त्या शास्त्रतः प्रतीयमानस्य सर्वस्य केवलज्ञानात्मकताया एव सिद्धेः, स्वरूपस्य च आनन्दमात्रत्वात्, तदतिरिक्तानामिन्द्रियाणामभावः सूच्यते निरुक्तश्रुत्या । न तु साकारतानिषेधः । अन्यथा प्रज्ञानघन एवेत्युक्त्वा एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति इति न वदेत् । अस्मिन्नेव प्रकरणे पूर्वश्रुतौ वेदनिःश्वासायनभूतसमुत्थानादेः श्रावणेन श्वासोच्छ्वासजगत्स्थापनभूतसमुत्थापनतदनुविनाशनक्रियाश्चोच्यन्ते, तेन सर्वथैव न त्वदभिमतं निराकारं ब्रह्म, किन्तु साकारं, सर्वाकारं, आनन्दाकारमेव ब्रह्म प्रतिपद्यते ।

**"दर्शयति चाथो अपि स्मर्यते"** इत्यत्रापि "अथात आदेशो नेति नेति", "अन्यदेव तद्विदितादथो अविदितादधि" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिभिः निर्विशेषत्वं प्रतिपाद्यते तदपि मन्दम् । निरुक्तश्रुतीनां समन्वयस्तु श्रीमत्प्रभुचरणै-

---

न वा स्मृत्याऽभीष्टसिद्धिः कल्पनीया। तथा हि—"ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते, अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" इत्यत्रापि सदसत्त्वनिषेधेनापि न त्वदभीष्टं सद्ध्यति। न सत्तन्नासदिति असत्त्वं सत्त्वं च विरुद्धौ धर्मौ तयोराश्रयं "न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरे" इत्यादिभागवतवाक्यैरुच्यते। न सत्तन्नासदुच्यते इत्यनेन ज्ञेयस्य ब्रह्मणः सत्त्वाभावोऽसत्त्वाभावश्चोच्येत चेत्, शून्यवाद एव प्रसज्येत। ब्रह्मणोऽस्ति शब्दावाच्यत्वे नास्तिशब्दवाच्यशशविषाणवन्नास्तित्वप्रसङ्गश्च दुर्वारः। सर्वासां बुद्धीनामस्तिनास्तित्वानुगतत्वेन ब्रह्मणोऽन्यतरविषयत्वेन त्वन्मतेऽपि अनिर्वाच्यत्वस्वीकारे अनिर्वाच्यत्वप्रकारकं ब्रह्म न निर्विशेषं भवेत्। न च ब्रह्म न सद्भावाश्रयः, नासदभावाश्रयः, इत्येव "न सत्तन्नासदुच्यते" इत्यनेन ज्ञाप्यते; अतो नोच्यते केनापि शब्देन मुख्यया वृत्त्या शब्दप्रवृत्तिहेतूनां तत्रासम्भवादिति वाच्यम्। शब्दस्य ब्रह्मण्येव मुख्यवृत्तित्वात्। "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतेः "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिस्मृतेश्च मुख्ययैव वृत्त्या शब्देन ब्रह्मपदार्थावगतेश्च। तद्यथा—गौरश्वः इति जातितः, पचति पठतीति वा क्रियातः, कृष्णः शुक्लः इति गुणतः, धनी गोमानिति सम्बन्धतः अर्थं प्रत्याययन्ति। एवं च यं कञ्चिद्धर्मं स्वात्मानं वा प्रवृत्तिं वा निमित्तीकृत्य अर्थं प्रत्याययन्ति शब्दाः। अत्रापि ब्रह्मत्वेन धर्मेण, सर्वाश्रयत्वेन वा सम्बन्धेन ब्रह्मप्रत्ययो भवेदेव। नोचेदीश्वरसिद्धिरेव न स्यात्। न च लक्षणयेति वाच्यम्। लक्षणापक्षस्य श्रीमदाचार्यचरणैः पण्डितपुरन्दरैश्च खण्डितत्वात्। अतोऽभिधयैव ब्रह्मपदार्थावगतिरिति सद्भिराकलनीयम्। विस्तरभिया विरम्यते। तच्च ब्रह्म नैव नीरूपं किन्तु साकारमेव। इतः परं ज्ञेयत्वेन "सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्" इत्यादिना तत्स्वरूपस्य प्रतिपादनात्। सर्वतः पाणिपादादिकथनेनालौकिकाकारत्वमेव सिद्ध्यति। सदसतोः क्षेत्रत्वाज्ज्ञेयनिरूपणे निषेधः। तेन प्रपञ्चधर्मा न भगवति भवन्ति, किन्तु तद्भिन्ना अलौकिका एव धर्मा इत्येव रमणीयम्।

प्रपञ्चधर्मा ब्रह्मणि उपचारादुच्यन्ते इत्यत्र निदर्शनार्थं **"अत एव चोपमा सूर्यकादिवत्"** इति सूत्रयाञ्चक्रुर्व्यासपादाः। न तु "उपाधिनिमित्ता पारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते" इति ध्येयम्।

**"अम्बुवदग्रहणात्तु न तथात्वम्" "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्"** इत्येताभ्यां निरुक्तोपमाया युक्तायुक्तत्वं विचार्यते, तत्र विशेषतो नास्ति किञ्चित् खण्डनीयमतोऽत्र न किञ्चित ब्रवीमि। **"दर्शनाच्च"** इत्यत्रापि तथा। अत्र

## कर्तृत्वादीनामलौकिकत्वम्

**एवं नारायणस्य परब्रह्मत्वं साकारत्वं च प्रकटय्य ब्रह्म सर्वथा निर्धर्मकं निर्गुणं चेति मतं परिहर्तुं तस्य कर्तृत्वाद्यलौकिकधर्मान्निरूपयति—**

---

भाष्ये निराकारपक्षे काश्चन युक्तयः समुत्क्षिप्तास्तासां सर्वासामपि युक्तीनामत्रैव पूर्वपक्षरूपेणास्माभिरुपन्यस्य खण्डनं कृतमेव। अतो नात्र तत्खण्डनार्थं प्रवृत्ता भवामः। मुहुर्मुहुरुपाधिपक्षस्य खण्डनेन न भवेत्पिष्टपेषणमिति मनसि निधायैवोपेक्ष्यते।

एवं नारायण एव परं ब्रह्मेत्युक्त्वा कर्तृत्वं प्रतिपाद्यते—**कर्तृत्वाद्यलौकिकधर्मानिति**। उत्पत्तिस्थितिसंहृतयो भगवानेव करोतीत्यर्थः। आदिशब्देनात्तृत्वान्तरत्वान्त-**र्यामित्वाहृश्यत्वादिगुणकत्वसर्वप्रसिद्धत्वव्यापकत्वसार्वात्म्यसर्वाधारत्वप्रभृत्यलौकिका एव धर्माः**। यत्तु क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद्घटवदिति कार्यलिङ्गाद्यनुमानैः कर्तृत्वं साध्यते, यच्च लौकिकैर्हेतुभिः साध्यं तत्कथमलौकिकं भवेत्, इति, तन्न परब्रह्मणो लौकिकत्वात्तत्कर्तृत्वमप्यलौकिकमेव। न ह्यनायासेन विविधलीलाचतुरस्य मनसाप्याकलयितुमशक्यरचनस्य अनेककोटिब्रह्माण्डानामुत्पत्तिस्थितिभङ्गकरणं लौकिकम्। किञ्च लोके पुरुषैः स्वोदरपूरणार्थं पाकनिष्पत्त्यर्थमपि महानायासः साध्यते, सोपि कदाचित्सफलप्रयत्नः कदाचिद्विफलप्रयासश्च दृश्यते। महतायासेनापि सम्पादितं कार्यं भगवदिच्छामन्तरा नैव सिद्ध्यति। भगवांश्च निखिलमप्यनायासेनैव करोति, जगदुत्पादने भगवता यत्नः क्रियत इति न केनापि दृष्टं श्रुतं वा। किञ्च लोके हि 'विषवृक्षोऽपि सम्वर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इत्यभियुक्तोक्तानुसारेण नैव कश्चित् स्वोत्पादितं वस्तु विलयं नयति भगवाँश्च चिक्रीडिषया जगदुत्पादयति, तत्र क्रीडति संहरति च। कः खलु स्वपुत्रं पत्नीं वा व्यापादयेत्। अतो भगवतो निर्लेपत्वात्तस्य कर्तृत्वादिकं निखिलमप्यलौकिकमेव।

यत्तु ब्रह्मणो निमित्तकारणत्वमेव नोपादानकारणमित्युच्यते तदपि न "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्ति तद्ब्रह्म विजिज्ञासस्व" "सर्वं खल्विदं ब्रह्म तज्जलान्" "जन्माद्यस्य यतः शास्त्रयोनित्वात्" इत्याद्यनेकश्रुतिसूत्रैरभिन्ननिमित्तोपादानत्वं स्फुटीभवति।

**अत्तृत्वं**—समन्वये द्वितीयपादे "अत्ता चराचरग्रहणात्" इत्यधिकरणे प्रतिपादितं व्यासपादैः। तत्र कठवल्लीस्थं "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनम्, मृत्युर्यस्योपसेचनं

संहारकत्वं शिवस्योच्यते, इति चेत्सत्यम्, शिवस्यापि परब्रह्मणस्तमोरूपाधिष्ठातृत्वाद्भगवदंश-त्वात्संहृतिकार्ये नियोजितत्वान्न तस्य स्वतन्त्रमत्तृत्वम्। निरुक्तश्रुतेर्ब्रह्मप्रकरणपठितत्वाच्चा-लौकिकमत्तृत्वं नारायणस्यैव।

**आन्तरत्वं**—"अन्तस्तद्धर्मव्यपदेशात्" इत्यत्र समन्वये प्रतिपादितम्। "य एषोऽ-न्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदितेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवतमथाध्यात्ममथ य एषोऽक्षिणि दृश्यते" इत्यादि-छान्दोग्यश्रुतेः। अत्रादित्यान्तर्दृश्यमानः परमात्मैव। कुतः? तद्धर्मोपदेशात्, उदित्यादे-र्ब्रह्मधर्मस्योपदेशात्। अयम्भावः—कारणं ब्रह्मकार्यं जगदिति स्थितम्। तत्र यथा कार्या-साधारणधर्मा विकारितादयो न कारणे गच्छन्ति तथा कारणासाधारणधर्मा अपि कार्ये कारणधर्माश्चोपजीव्यत्वाद्वलिष्ठाः, अतोऽपहतपाप्मत्वादीनां ब्रह्मधर्माणामत्रोपदेशाद्ब्रह्मैव। हिरण्मयशब्दस्तु न विकारे प्रकृतिभूतहिरण्मयशब्दस्य व्यच्त्वात्। केशादयस्तु नाम-मात्रेण तुल्या न वस्तुतः। परिच्छेदधर्मस्तु ब्रह्मधर्म एव "अणोरणीयान्" इत्यादिश्रुतेः। चाक्षुषत्वं तु भगवदिच्छया, नत्विन्द्रियसामर्थ्यात्। "तस्यैष आत्मा विवृणुते तनुं स्वाम्" इत्यादिश्रुतेः। अस्थूलादिवाक्ये स्थूलत्वादिनिषेधस्तु लौकिकानामेव तेषाम्। अतो ब्रह्मण एव सर्वान्तरत्वं तच्च न लौकिकं सम्भवतीति ध्येयम्। अत्र भिक्षवः—काण्वपञ्चमाध्यायस्थं "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरो योऽशनाया पिपासे शोकं मोहं जरां मृत्युमत्यति" इति वाक्यमुपन्यस्य तदर्थस्य ब्रह्मत्वं चिन्तयन्ति। तदविरुद्धम्।

**अन्तर्यामित्वं**—"अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" इत्यत्र चिन्तितम्। "य इमं च लोकं परं च लोकं सर्वाणि भूतान्यन्तरो यमयति" इति प्रकृत्य वाजसनेयके श्रूयते "यः पृथिव्यां तिष्ठन् यः पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयति, एष त आत्मान्तर्याम्यमृतः" इति। अत्राधिदैवादिष्वन्तर्यामि किं पृथिव्याद्यभिमानी देवताविशेष उत योगप्राप्ताणिमाद्यैश्वर्यो जीव उत परमात्मा इति संशये; अन्तर्यामिशब्दोऽन्तर्यमननिबन्धनोऽत्र पृथिव्याद्यभिमानिनीं देवतां प्रकाशयति, योगप्राप्तसिद्धिं जीवान्तरं वा, न तु परमात्मानम्। तत्रास्याः सञ्ज्ञाया अप्रसिद्धत्वादिति प्राप्तम्। तत्राहुः—परमात्मैव। कुतः? तद्धर्मव्यपदेशात्। सर्वनियमनशक्तेस्तत्रैवोपपत्तेः।

**अदृश्यत्वादिगुणकत्वं**—"अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यत्र सर्वोऽपि मुण्डकोपनिषद्विषयवाक्यतयोक्तेति ज्ञेयम् । अदृश्यत्वादिगुणकोऽक्षरत्वेनोक्तः परमात्मैव विश्वरूपजनकस्य तत्रोक्तेः । तेनादृश्यत्वादिगुणकत्वरूपो धर्मोऽप्यलौकिक एव ।

**सर्वत्रप्रसिद्धत्वं तु**—"सर्वत्रप्रसिद्धोपदेशात्" इत्यधिकरणे छान्दोग्यस्थशाण्डिल्यविद्यां विषयीकृत्य साधितम् । तत्र "मनोमयः प्राणशरीर" इत्यनेन विज्ञानमयस्य जीवस्य मनोमयत्वादिधर्मवैशिष्ट्यात्तैरेव च धर्मैः कर्तृत्वनिर्वाहाद्ब्रह्मणो जगत्कर्तृत्वमपि नोपपद्यत इत्याशङ्कायां जीवस्य ब्रह्मत्वेनोपासनं निवार्य सर्ववेदान्तप्रसिद्धब्रह्मण एवोपदेशाद्ब्रह्मैवोच्यत इति सर्ववेदान्तप्रसिद्धत्वं स्फुटमेव । गीतास्मृतावपि "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति पुरुषोत्तमस्तु क्षराक्षरातीतः प्रसिद्ध एव ।

**व्यापकत्वं तु**—"यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इतिश्रुत्या स्पष्टमेव । ननु साकारस्य व्यापकत्वं कथमुच्यत इति चेत्, श्रूयताम्—"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्, सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः" एक अद्वितीयो देवो दशविधलीलाविशिष्टः । दिवुधातोर्दशविधार्थकत्वात् । द्यावाभूमी जनयन् स्वस्मादाविर्भावयन् बाहुभ्यां सन्धमति । धमतिर्गत्यर्थः सङ्गच्छते । साधनैर्विनैव सर्वं सृजतीत्यर्थः । कीदृशः । विश्वतश्चक्षुः सर्वतः चक्षूंषि यस्य । विश्वतोमुखः सर्वतो मुखानि यस्य । विश्वतो बाहवो भुजा यस्य । उतापि च विश्वतः पादा यस्य । 'पादस्य लोपो हस्त्यादिभ्यः' इति पादस्यान्त्यलोपः । अत्र एकस्यैव सर्वकर्तुरीश्वरस्य चक्षुरादीनीन्द्रियाणि सर्वत्र सन्तीत्युक्तम्, तेनासावप्राकृताकारः साकारोऽपि सर्वत्र व्याप्य तिष्ठति । एवमेव "सहस्रशीर्षा पुरुषः" इत्यादयोऽनेकशः श्रुतयस्तस्य साकारत्वं व्यापकत्वं च प्रतिपादयन्ति । नहि विरुद्धधर्माधारस्य तस्य किञ्चिदप्यशक्यम् । "सर्वोपेता च तद्दर्शनात्" इति व्याससूत्रेऽपि ब्रह्मणः सर्वोपेतत्वमुक्तम् । "व्याप्तेश्च समञ्जसम्" इति वैयासन्याये च 'साकारमेव व्यापकम्' इति स्पष्टमेव ज्ञापयाञ्चक्रुः श्रीमदाचार्यचरणाः । "सर्वतःपाणिपादान्तम्" इति गीतायामपि साकारस्य व्यापकत्वमुच्यते श्रीमुखेन । "सर्वरसः" इति छान्दोग्यश्रुत्या रसात्मकत्वेनैव तस्यावस्थितेरुक्तत्वाच्च इति । "सच्चिदानन्दरूपं हि ब्रह्म व्यापकमव्ययम्" इति कारिकाऽप्यत्राऽनुसन्धेया । "निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः" इति । गुणोपसंहारन्यायश्चानुसन्धेयः । "आत्मनि चैवं विचित्राश्च हि" इतिसूत्रमपि ब्रह्मणो विरुद्धधर्माश्रयत्वे हेतुः । "आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च त्रिविधभेदविवर्जितात्मा" इत्यादि-

अकामयतेति। "स वै नैव रेमे", "तस्मादेकाकी न रमते", "स द्वितीयमैच्छत्", "एकोऽहं बहु स्याम्" इतिश्रुत्युपदिष्टां चिक्रीडिषामकरोत्।

क्रीडायाः प्रयोजनान्तरं नास्ति

ननु क्रीडा हि सर्वत्र स्वानन्दफलैवावलोक्यते। नह्याप्तकामस्य प्रकटानन्दविग्रहस्य ब्रह्मण आनन्दापेक्षास्ति। न च तत्स्वरूपानन्दो न्यूनो यतोऽधिकार्थं चिक्रीडिषा स्यात्। इष्टापत्तिश्चेत्प्रलये न्यूनानन्दत्वप्रसङ्गो दुष्परिहर इति चेत्, न; "लोकवत्तु लीलाकैवल्यम्" इति सूत्र एव भगवता बादरायणेन समाहितत्वात्। तत्र हि "न प्रयोजनवत्त्वात्" इति सूत्रेण न ब्रह्म जगत्कारणम्, कुतः? प्रयोजनवत्त्वात्। कार्यं हि प्रयोजनवद्दृष्टं लोके, ब्रह्मणि पुनः प्रयोजनवत्त्वं नैव सम्भाव्यते, आप्तकामश्रुतिविरोधात्, इति पूर्वपक्षे, "लोकवत्तु लीलाकैवल्यम्" इत्याह। अत्र तुशब्दः पूर्वपक्षं व्यावर्तयति, लोकवदेव हि लीला। न हि लीलायां किञ्चित्प्रयोजनमस्ति, लीलाया एव प्रयोजनत्वात्। यथा जगति नृपैर्मृगया क्रियते, नास्ति तत्रामेध्याहरणादिकं प्रयोजनम्, सेवकैरपि तत्सम्भवात्। किन्तु सा लीलैव। न हि स्वराज्यसुखात्तत्सुखं विशिष्टं येन तत्रोपपद्येतापि प्रवृत्तिः। एवं ब्रह्मापि प्रयोजनं विना स्वेच्छयैव क्रीडतीति निगमादिषु तथासिद्धत्वात्। तस्य कर्तुमकर्तुमन्यथाकर्तुं सर्वदा स्वतन्त्रत्वेन लीलाया अनुयोगविषयत्वाभावाच्च। सैव कैवल्यं यतः। न च कारणं विना कार्याभाव इति शङ्क्यम्, इच्छाया नित्यत्वेन तत्र तदपेक्षाभावादिति नात्र शङ्कापङ्कावकाशः।

---

आत्मा जनानाम्" "स आत्मानꣳ स्वयमकुरुत" "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" "सर्वोपेता च तद्दर्शनात्" इत्यादिश्रुतिस्मृतिन्यायैः साध्यते।

**सर्वाधारत्वं** हि "अक्षरमम्बरान्तधृतेः" इतिसूत्रे प्रतिपादितमेव।

एते सर्वेऽपि धर्मा अलौकिका एवात्र ज्ञेयाः।

**चिक्रीडिषामिति**। कर्तृत्वादिकं निखिलमपि रमणार्थमेव। न हि प्रयोजनान्तरं कल्प्यम्। "क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते" "क्रीडाभाण्डमिदं विश्वम्" इत्यादिवाक्यैः क्रीडार्थमेव सर्वं करोतीति ध्येयम्। **लीलाया एव प्रयोजनवत्त्वादिति**। "स द्वितीयमै-

### एकाकित्वे सन्देहनिरासः

न च "एकोऽहं बहु स्याम्" "स द्वितीयमैच्छत्" इत्यादाविच्छोपलब्ध्यैकाकित्वकथनं न समञ्जसमिति शङ्क्यम्; तथात्वे "एकाकी हयमारुह्य जगाम गहनं वनम्" इतिपुराणीयवाक्यानुपपत्तेः, तदीयज्ञानेच्छावस्त्रशस्त्रादीनां सत्त्वात्। किञ्च, फलं भुञ्जानोऽयमत्र तिष्ठति, एकं फलं भुङ्क्ते, फलमेकाकी भुङ्क्ते एवम्प्रकारकवाक्यासङ्गतिर्भवेत्। फलनिष्ठगुणरसक्रियाजात्यादीनामुपलम्भेनैकत्वस्यानुपलम्भात्। अतोऽत्रैकाकिपदं सहायरहितत्वज्ञापकमेव।

### तच्छब्देन हिरण्यगर्भो न ग्राह्यः

ननु "स द्वितीयमैच्छत्" इत्यत्र तत्पदेन हिरण्यगर्भस्योपदिष्टत्वेन ब्रह्मबोधकत्वस्यानौचित्यमिति चेत्, न; इच्छारहितत्वेन तस्य सिद्धेर्द्वितीयस्य ब्रह्मण एव तदा सत्त्वेन द्वितीय इच्छोत्पत्तेरभावात्। तस्य ब्रह्मणः पूर्ववर्तमा-

---

भगवान् सहायान्तरं विनैव सर्वं करोतीति प्रतिपादयितुमाहुः—**नचेति**। एकाकिशब्दस्य सहायान्तराभाववत्त्वमर्थः। "एकादाकिनिच्चासहाये" इत्यनेनासहायवाचकादेकशब्दात्स्वार्थे आकिनिच्प्रत्यये सिध्यत्ययमेकाकिशब्दः। "स एकाकी न रमते" इत्यत्रापि सहायान्तराभावादेकाकिपदोपन्यासः। **इच्छोपलब्ध्येति**। इच्छायाः स्वस्मिन्नेव वर्तमानत्वात् तच्छक्तित्वाच्च सहायान्तराभावः स्फुटमेव प्रतीयते। शक्तिशक्तिमतोरभेदात्। ननु मायासहायत्वं कथं नाङ्गीक्रियत इति चेत्, न; मायाया अपि तच्छक्तित्वात्। नहि स्वशक्तिः स्वात्मानमेवाभिभावयति। तस्या अपि स्वेच्छाधीनत्वात्। नहि लोके स्वशक्त्याऽभिभूतः कश्चिद्दृश्यते। नहि माययाऽभिभूतः परमेश्वरः सर्वं करोतीति वाच्यम्; मानाभावात्, श्रुतिसूत्रविरोधाच्च। भगवान् मायां स्वेच्छया नियोजयति, नहि माया भगवन्तम्, तस्यास्तदधीनत्वात्। न वा माया स्वतन्त्रेति वाच्यम्, मायाया भगवतश्चेत्युभयोः स्वातन्त्र्यप्रतिपादनेन द्वैतापत्तेः, भगवच्छक्तित्वविरोधाच्च। न च कालादीनां सहायकत्वं वाच्यम्, "आत्मनि चैवं विचित्राश्च हि" इति वैयासन्याये आन्तररमणे यथा देशकालापेक्षा नास्ति तथैव बहिरपीति निपुणं "अनन्तरोऽबाह्य" इति बृहदारण्यकश्रुत्या विवेचितम्। अतो भगवान् सहायान्तरं विनैव सर्वं करोतीति ज्ञेयम्।

तत्पदेन हिरण्यगर्भो न ग्राह्य इत्यत आहुः—**नन्विति**। अत्रायं भावः—मायावादिभिर्बृहदारण्यकप्रथमाध्यायचतुर्थब्राह्मणस्यार्थो धातृपरत्वेन कृतः। तत्र हिरण्यगर्भापरपर्यायो

प्रजाः सृजेयेति ।

नत्वेनैकाकित्वस्य बाधाच्च । किञ्च "सदेव सोम्येदमग्र आसीत्", "तदैक्षत", "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिनिगमवाक्येष्वपि तस्यैवोपादेयत्वं भविष्यति । न भविष्यति, एकपदविरोधात् इति चेत्, अत्राप्येकाकिपदविरोधादपीति दिक् ।

प्रकृतमनुसरामः । पूर्वनिरूपितामिच्छां विशिनष्टि—प्रजाः सृजेयेति । प्रकर्षेण ब्रह्मणः सकाशाज्जायन्त इति प्रजाः । जननं हि आविर्भाव एव । जनीधातोः प्रादुर्भावबोधकत्वात् । तथैव नाशस्तिरोभाव एव । णशधातोरदर्शनार्थकत्वात् । तौ हि "आविर्भावतिरोभावाः स्वपदे तिष्ठन्ति" "आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः" इति श्रुतिपुराणवचनाभ्यां भगवतः शक्तिस्वरूपावेव । आविर्भावतिरोभावशब्दौ करणव्युत्पन्नौ भावव्युत्पन्नौ च । तत्र प्रथमे पक्षे आविः प्रकटं भावयति कारणान्तःस्थं कार्यं बहिः प्रकटी-

---

रण्यगर्भस्य प्रादुर्भावादिति भावः । "हिरण्यगर्भं जनयामास पूर्वम्" इतिश्रुतेः । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेश्च । "नतोऽस्म्यहं त्वाऽखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् । यन्नाभिजातादरविन्दकोशाद्ब्रह्माऽऽविरासीद्यत एष लोकः" इति भागवतादिष्वपि भगवतो नाभिकमलात्तत्प्रादुर्भावस्योक्तत्वाच्च ।

प्रजा इति । "उपसर्गे च सञ्ज्ञायाम्" इति जनेर्डः । प्रादुर्भवनं धात्वर्थः । प्रादुर्भावश्च विद्यमानस्यैव वस्तुनो नाविद्यमानस्य । भगवान्नारायणो जीवान् आविष्कर्तुमैच्छदित्यर्थः । मूले सृजेयेत्यात्मगामिनो लिङि रूपम् "इच्छार्थेषु लिङ्लोटौ" इति पाणिनीयानुशासनात् । एवंच सर्जनेच्छया जीवान् प्रादुश्चक्रे नारायण इति वाक्यार्थः । ननु सर्जनं हि लोकेऽविद्यमानस्यैव वस्तुनः क्रियते, प्रजानां सर्जनेच्छा हि नैव भवितुमर्हति तासामाविर्भावेच्छा, पुनः कथमयमाविर्भाववाद उपक्षिप्यते सतां पुरतः ? अत्रापि श्रूयताम्—सृजविसर्गे इति धातोः सम्बन्धोर्थः । विसर्गः सम्बन्धः, "संसृज्यते सरसिजैररुणांशुभिन्नैः" इत्यभियुक्तोक्तेः, अरुणांशुभिन्नैः अरुणकिरणविकसितैः सरसिजैः कमलैः सम्बध्नातीत्यर्थः । वस्तूनां सर्जने चोपादानकारणस्य तत्तदाकारैः सम्बन्ध एव सर्जनमर्थः । घटं करोति कुम्भकार इत्यत्र, मृदा, पृथुबुध्नोदराकारेण सम्बन्ध एव घटपदार्थः । घटो ध्वस्त इत्यत्राप्याकारस्यैव तिरोभावः । तेनोपादानकारणस्याकारेण सम्बन्धः सर्जनम्, विसर्गो धात्वर्थः इच्छा च लिङर्थः । तेन सर्जने-

धातुस्त्वकर्मकः सम्बन्धार्थः, अत्र हि प्रजाः सृजेयेति श्रुतौ सकर्मकः प्रयोगो दृश्यते, कथं तर्हि तस्य सम्बन्धोऽर्थः सिद्ध्यतीति चेत्, सत्यम्, तौदादिकस्य सृजिधातोः प्रजाः सृजतीत्युदाहरणमुपन्यस्य सकर्मकत्वं प्रतिपादितम्, तत्र विसर्गस्य उत्पादनमर्थः । उत्पादनमप्याविर्भाव एव । उत्पूर्वस्य गत्यर्थकात्पदधातोः क्तिन् प्रत्यये उत्पत्तिरिति साधुस्तस्य च उद्गमनमर्थः, उद्गमोऽप्याविर्भावातिरिक्तो नास्ति । एवंच प्रजायन्त आविर्भवन्ति ताः प्रजाः । जायत इति जन्म जनीधातोर्मनिनि प्रादुर्भावोर्थः । भागवतेऽपि "भूतमात्रेन्द्रियधियां जन्मसर्ग उदाहृतः । ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः" इत्यत्र सर्गलीलाया विसर्गलीलायाश्च आविर्भाव एवार्थः । एवमेव नाशशब्दस्यापि तिरोभावोर्थः । णश अदर्शन इति धातोर्घञि अदर्शनार्थो नाशशब्दो व्युत्पद्यते स च तिरोभाव एव । मृतिशब्दस्यापि प्राणत्यागोर्थः । स च संयोगविनाश एव । एवंच जन्मोत्पत्तिमृतिनाशशब्दैराविर्भावतिरोभावावेव योगरूढौ सिध्यतः । तथाच आविर्भावो नाम विद्यमानस्य वस्तुनोऽनुभवयोग्यत्वम् । तदभावश्च तिरोभावः ।

ननु आविर्भावो घटस्य कारणव्यापारात्प्राक् सन् असन् वा ? अन्त्येऽसत्कार्यापत्तिः । आद्ये कृतं तर्हि कारणव्यापारेण । नहि सति कार्ये कारणव्यापारप्रयोजनं दृश्यते । आविर्भावे चाऽऽविर्भावान्तरकल्पनेऽनवस्थादोषः प्रसज्ज्येत । अत्रोच्यते भवन्मतेऽसदुत्पद्यते, तर्हि केयमुत्पत्तिः ? सती वा असती वा ? सती चेत्तर्हि कृतं कारणैः । असती चेत् तस्या अप्युत्पत्त्यन्तरमित्यनवस्था तथैव । अथ उत्पत्तिर्घटान्नार्थान्तरम्, अपि तु घट एवासौ, तथापि यावदुक्तं भवति घट इति तावदुक्तं भवति उत्पद्यत इति ततश्च घट इत्युक्ते उत्पद्यत इति न वाच्यम् । तथासति पुनरुक्तिदोषः । विनश्यति इत्यपि न वाच्यम् । उत्पत्तिनाशयोर्युगपदेकत्र विरोधात् । तस्मादियं घटोत्पत्तिः स्वकारणसमवाया वा, सत्तासमवाया वा ? उभयथापि नोत्पद्यते, अथच तदर्थानि कारणानि व्यापार्यन्ते । एवं सत एव घटादेराविर्भावाय कारणापेक्षेति युक्तमुत्पश्यामः । आविर्भावतिरोभावयोर्नित्यत्वात्, युगपत्प्रवृत्तिर्भविष्यतीत्यपि न वाच्यम्, तयोर्भगवच्छक्तित्वात् तस्याश्च भगवत इच्छाधीनत्वात् ।

ननु भवन्मते तु सर्वत्र श्रुतिं प्रमाणयन्ति तर्हि कथमयं वादः श्रुतिप्रमाणव्यतिरेकेणैवोपक्षिप्यत इति चेत्, मैवं विमनायेथाः एनमपि भवन्मनोरथं पूरयितुं समर्थोऽस्त्ययं वाक्पतिप्रादुर्भावितशुद्धाद्वैतब्रह्मवादः । तथाहि— ऋग्वेदसंहितायाम् "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते" इति "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" "नामरूपे व्याकरवाणि" "तस्यैवम्विजानत वम्मन्वानस्य" इत्युपक्रम्य "आविर्भावतिरोभावावात्मनोऽन्नमात्मन" इत्यादिश्रुतिभिः "तदेतदक्षयं नित्यं जगन्मुनि-

---

काले काले यथोचितम् । ईशेच्छयाऽऽविर्भूतं हि न भवेत्प्रतिबन्धकम्" "ब्रह्माण्डं वा कतिविधमाविर्भूतं तिरोहितम् । विधेया वा कतिविधास्तस्य भ्रूभङ्गलीलया" "तन्निरोधोऽस्यानुशयनमाविर्भावस्तु सम्भवः" "आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः" इत्यादिस्मृतिपुराणवचनैश्च आविर्भावतिरोभावौ भगवतः शक्तीति ज्ञेयम् । तयोः शक्तित्वं तु "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतेः ।

ननु भोः, भवन्मते तिरोभाव एवाभावानामन्तर्भावस्तर्हि किमयं तिरोभावः प्रमाणं प्रमेयं वा ? नाद्यः, शब्दप्रमाण एव प्रमाणान्तरमन्तर्भाव्यते भवद्भिः । अन्त्ये, प्रमाणशब्दो भवन्मते भावव्युत्पन्नोऽप्यङ्गीक्रियते, तेन तिरोभावापरपर्यायस्याभावस्य प्रामाण्यापत्तिः, तच्च न सम्भवति । नच नास्तीति व्याहारव्यवहाराः प्रमाणान्तरमन्तरेण न सम्भवन्तीति वाच्यम्, भूतलविशेषादेवोपपत्तेः । न च नास्तिव्यवहारस्य 'अस्ति'व्यवहारविषयभूतं भूतलं नालम्बनम्, 'अस्ति–नास्ति'व्यवहारयोरेकविषयता प्रसङ्गादिति शङ्क्यम् । अभावाख्यं प्रमेयमस्तीति वादिना भवता तु तदभावस्य 'अस्ति'व्यवहारविषयत्वमङ्गीकृतमेव । इतरथाऽभावाभावस्य नास्तित्वप्रसङ्गात्, ततश्चाभावोऽपि नास्तिव्यवहारे विषयो न स्यात् । अथ यद्यप्यभावस्य स्वापेक्षया अस्तिव्यवहारविषयत्वम्, तथापि स घटापेक्षया नास्तिव्यवहारविषयः, तर्हि भूतलमपि स्वापेक्षया अस्तिव्यवहारविषयः, घटापेक्षया नास्तिव्यवहारविषय इति किं तत्त्वान्तराभ्युपगमेन ? भूतलमात्रस्य विषयत्वात् । ननु तर्हि कः केवलः पदार्थः ? यदि भूतलमेव, घटवत्यपि प्रसङ्गः, अथ ततोऽन्यत् अङ्गीकृतं तर्हि तत्त्वान्तरम् । अथैकाकि भूतलमिति चेत्, 'एकादाकिनिच्चासहाये' इत्यनुशासनात् सहायाभावाङ्गीकारप्रसङ्गः । अथ स्मर्यमाणेऽपि प्रतियोगिनि भूतलमेवाऽऽलम्बनम्, गृह्यमाणे तु स्मरणाभावादेव न 'नास्ति'व्यवहारः, एवं तर्हि देशान्तरस्थे गृह्यमाणे देशान्तरे तदभावव्यवहारो न स्यात् । अथ तत्रापि देशान्तरसम्बन्धिरूपस्य प्रतियोगित्वात्तत्सम्बन्धितया स्मरणासम्भवान्नास्ति व्यवहारो न स्यात् । अथ जिज्ञासिते प्रतियोगिनि भूतलमालम्बनम्, सघटे तु प्रतियोगिनो ज्ञातत्वान्न जिज्ञासेति, नैवम्; प्रिये पुत्रादौ ज्ञातेऽपि पुनर्नेच्छासम्भवात् व्यवहारप्रसङ्गात् । जिज्ञासायाश्च विलक्षणव्यवहारहेतुत्वं विलक्षणार्थज्ञानहेतुतया दृष्टम्, अतो घटजिज्ञासायां 'नास्ति'व्यवहारहेतुत्वं भूतलातिरिक्तं घटाभावपरिच्छेदेनैव भवतीत्यङ्गीकृतं तत्त्वान्तरम् । अथ तदतिरिक्तसामग्रीविशिष्टं भूतलमालम्बनम् । सघटे तु तदभावान्न प्रसङ्ग इति किमिदं तदतिरिक्तत्वम् ? यदि ततोऽन्यत्वम् तर्हि संसृष्टावस्थायामपि तत्सम्भवात् 'नास्ति' व्यवहारप्रसङ्गः । यदि तदभावः, स्वीकृतमेव तर्हि तत्त्वान्तरम् । अतोऽप्येतद्भूतलमात्रविज्ञानं न कारणम्, अपि तु भूतलबुद्धि-

कारिवैकल्यात्, घटानुपलब्धिस्तु सहकारिणी, तेनानुपलब्धिविशिष्टं भूतलमात्रज्ञानमभावज्ञानोत्पादकम्। एवं तर्हि तदेव व्यवहारकारणमस्त्विति चेत्, नैव, विषयवैलक्षण्याभावात्। तथाहि, भूतलमात्रस्यैवानुपलब्धिसहकारिसमवधानाज्ज्ञानान्तरोत्पादकत्वमुपपद्यते, यथैकस्यैव घटस्य चक्षुःस्पर्शनभेदाज्ज्ञानभेदः, अतः संसृष्टबुद्धिविलक्षणबुद्ध्युत्पादादभावज्ञानहेतुत्वमुपपद्यते, विलक्षणव्यवहारस्य विलक्षणविषयकृतत्वेन दृष्टत्वात्, यथा घटपटव्यवहारयोः। अतोऽभावज्ञानकारणेनैवाभावव्यवहार इति न प्रतिबन्दिसिद्धिः। अत्रोच्यते—नास्तिव्यवहारस्य नास्तिज्ञानकारणत्वेऽपि नास्तिज्ञानस्य कारणत्वेन तन्मात्रबुद्धिरभाववादिनाऽप्यङ्गीकृता, सा च संसृष्टज्ञानादभावविशिष्टज्ञानाच्च विलक्षणत्वेनाङ्गीकृता। तदुक्तम्—"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽज्ञानपेक्षया" इति। अतो वस्तुसद्भावग्रहणरूपतन्मात्रबुद्धिस्वसम्वेदनादेव विलक्षणव्यवहारोपपत्तिः, अतो न घटवत्यपि प्रसङ्गः, तत्र विलक्षणतन्मात्रबुद्धेरभावात्। यद्यपि कारणभेदाद्भेदः, तथापि विषयकृत एव भेदो व्यवहारहेतुरिति चेत्, सत्यम्, विलक्षणतन्मात्रबुद्ध्यङ्गीकारादेव तद्विषयस्यापि वैलक्षण्यमवश्यमङ्गीकार्यम्, विषयविषयिभावस्य भेदात्। अतो विलक्षणव्यवहार उपपद्यते। यथा विलक्षणतन्मात्रबोधात् विलक्षणाभावज्ञानोत्पत्तिः, तथा विलक्षणव्यवहारोऽस्माकमिति न दोषः। यत्तूक्तम्, कारणभेदमात्रेण ज्ञानभेदे न विलक्षणव्यवहारो दृष्टः, यथा चाक्षुषस्पार्शनयोरेकविषययोरिति, तन्न, चाक्षुषपटज्ञानाच्छुक्लः पटः इत्यपि व्यवहर्तुं शक्यते, स्पार्शनात्तु मृदुः पट इति, अतस्तत्रापि विलक्षणव्यवहार इति। किञ्च, विलक्षणव्यवहारो विलक्षणार्थपरिच्छेदादित्यपि न, घटाभावो नास्ति, घटो नास्तीति। अथ तत्रैकार्थ्याद्व्यवहारवैलक्षण्यमेव नास्तीत्युच्यते, एवं तर्हि भूतलमस्ति घटो नास्ति इति व्यवहारयोरप्यर्थैक्याद् वैलक्षण्यं न स्यात्।

नन्वस्माकं प्रतियोगिजिज्ञासायां तन्मात्राधीनो विशेषः, जिज्ञासायाश्च विलक्षणव्यवहारहेतुत्वं विलक्षणार्थपरिच्छेदादेव; अतो विलक्षणाभावज्ञानाङ्गीकारप्रसङ्गः। नैवं, जिज्ञासायाश्च व्यवहारहेतुत्वम्, किन्तु, तन्मात्रबुद्धिविशेष एव व्यवहारहेतुः। केचित्तन्मात्रबुद्धिविशेषाः प्रतियोगिजिज्ञासानन्तरभाविनः, केचिच्च नेति, ये च प्रतियोगिजिज्ञासानन्तरभाविनो विशेषाः ते व्यवहारहेतवः। प्रतियोगिजिज्ञासा चात्रोपलक्षणकोटिनिविष्टा, न व्यवहारकारणम्, भवतामपि प्रतियोगिजिज्ञासाया अभावज्ञानहेतुत्वं नास्ति, किन्तु तत्कारणभूततन्मात्रबुद्धावुपलक्षणत्वमेव वस्तुसद्भावग्रहणं प्रतियोगिस्मरणं च कारणमित्युक्तत्वात्। यत्तूक्तम्—प्रिये ज्ञातेऽपि पुनर्ज्ञानेच्छा सम्भवति, अत उपलक्षणत्वेऽपि व्यभिचार इति

---

क्वचिद्विभक्तो घटः, क्वचित्कपालमाला, क्वचिच्चूर्णीभूतोऽवयवः, क्वचिच्च देशान्तरस्थितिः, अतोऽनियतहेतुकत्वादहेतुकमेव तन्मात्रज्ञानम्, अस्मन्मते तु अभावोऽभावज्ञानकारणम्। मैवम्, भवतामेकत्र प्रागभावः, अन्यत्र प्रध्वंसाभावः, अपरत्रेतरेतराभावोऽत्र विज्ञानहेतुः इति अनियतहेतुत्वमपि सममेव । अथ घटप्रतियोगिकाभावत्वेनैकत्वेऽप्यवान्तरभेदं कल्पयित्वा कारणभेदः समर्थ्यते, तर्ह्यस्माकमपि घटतन्मात्रबुद्धिरूपेणैकत्वेऽप्यवान्तरभेदः कल्प्यताम्। अथ न जातिभेदः, अभावानामेव कारणभूतानां भावविरोधित्वेनैकत्वमेव, तर्हि भावानामप्यनेकेषामभावविरोधित्वेनैकत्वेनाभावविज्ञानं न सम्भवति। योग्यानुपलब्धिर्हि कारणत्वेनाभिमता, तस्याश्च सत्तया कारणत्वम्, ज्ञायमानतया वा? न तावज्ज्ञायमानतया, तस्या अपि अभावत्वे नानुपलब्ध्यन्तरमग्रहणप्रसङ्गेनानवस्थाप्रसङ्गात्। नच सत्तया हेतुत्वम्, तदभावेऽप्यभावज्ञानदर्शनात्। उपलभ्यमानेऽपि देवदत्ते प्राङ्नासीदयमिहेति दर्शनानुपलम्भादेवानुपलम्भो निरस्तः। ननु प्रत्यक्षोपलम्भात्प्रत्यक्षानुपलब्धिमात्रस्यैव निरासः, नानुपलब्धिमात्रस्य; अतस्तत्र तत्स्मृत्यनुपलम्भस्य सम्भवादभावज्ञानमिति, नैवम्; तस्याप्यभावेऽप्यभावज्ञानदर्शनात्। तथाहि—मध्यन्दिने दृष्टो देवदत्तः प्रातर्नास्त्येवायमिहेति सायम्बुद्ध्या तत्र तदा मध्यन्दिनस्मृत्या स्मृत्यनुपलम्भो निरस्तः, सायङ्ग्रहणेनैव ग्रहणानुपलम्भोऽपि निरस्त एव; अतोऽनुपलब्धिमात्रस्यैव व्यभिचारान्न सत्तया हेतुत्वम्। अथोपलम्भात्तत्कालीनानुपलम्भबाधः न प्रातरनुपलम्भस्य; अतः प्रातरनुपलब्ध्या प्राङ्नासीदिति नास्तित्वं गृह्यते, तन्न; उपलम्भकत्वेन तत्प्रागभावरूपानुपलम्भोऽपि एक एव; अत उपलम्भे जातेऽनुपलम्भमात्रस्य नाशः; प्रातर्वर्तित्वोपाधिरपि प्रातर्नाशादेव नष्टः; अतो यावदुपलम्भक्षणं प्रसक्तः प्रागभावः उपलम्भादेव नश्यति। इतरथा, प्रध्वंसेऽपि मुद्गरप्रहारकालीन एव घटो नष्टः इति पूर्वकालीनो घटोऽनुवर्तेत; न चैतद् दृष्टमिष्टं वा। ननु यद्यप्युपलम्भोदयादनुपलम्भनिरासः, तथापि प्रातरुत्पत्तियोग्योपलम्भस्याप्यनुत्पन्नत्वात्तदनुपलम्भो वर्तते; ततोऽभावग्रहणमस्तु इति चेन्न; नित्यतुच्छत्वात्तस्योपलम्भस्य तत्प्रतियोगिकोऽप्यनुपलम्भो नास्ति। तथाहि—नच तस्य प्रातरुत्पत्तिः, नच पूर्वम्, नच पश्चात्, इत्युपलम्भजातीयत्वमेव तस्य नास्ति अतोऽनुपलम्भस्य सत्तया कारणत्वमपि दूरोत्सारितमेव। अतोऽभावाख्यं प्रमाणान्तरं नास्तीति ज्ञेयम्।

अत्रापि सावधानेन चेतसा श्रूयताम्—प्रमाणशब्दो वस्तुतः करणव्युत्पन्न एव ग्राह्यः, अन्यथा प्रमा तदसाधारणं कारणं चेति ज्ञेयज्ञापकभावोच्छित्तिः। भावव्युत्पत्तिस्तु सर्वस्य ब्रह्मात्मकत्वस्फोरणायैव। परमप्रमाणस्य वेदस्य च ब्रह्माभिन्नत्वज्ञापनायेति वा। अस्मन्मते परमालौकिकस्य ब्रह्मणो निर्णये शब्दातिरिक्तस्य प्रामाण्यं नास्ति। तदपि भवेद्यदि शब्दा-

करोति निमित्तोपादानगता च या शक्तिः साऽऽविर्भावशक्तिः । द्वितीये तु—आविर्भवनमाविर्भावः, तिरोभवनं तिरोभावः, इति तयोर्लक्षणम् । तच्च सृष्टावस्मिन्कालात्मके स्थूलोपाधौ तत्तत्प्रतीकात्मकतत्तत्कालोपाधिनिमित्तके तस्य तस्य तथा तथा तत्तदुपलम्भो भवत्विति तदा तत्र तस्य तथा तन्मा भवत्वितीच्छाविषयत्वमिति फलति ।

नचाविर्भावो नित्यो न वेति शङ्क्यम् । तस्य ब्रह्मशक्तित्वस्य प्रागुपपादित्वाच्छक्तिशक्तिमतोरभेदान्नित्य एव । नित्यत्वेऽपि नानवस्था । पदार्थाविर्भावस्यैवाविर्भावाविर्भावपदार्थत्वात् । न हि पदार्थाविर्भावादतिरिक्ताविर्भावस्याविर्भावः । सम्बन्धसम्बन्धभेदभेदादिवत् ।

ननु सर्वं कार्यं ब्रह्म जानाति न वा ? अन्त्ये—ब्रह्मणः सर्वज्ञत्वहानिः, "यः सर्वज्ञः सर्ववित्" इतिश्रुतिविरोधप्रसङ्गश्च । आद्ये—सर्जनं किम्प्रयोजनकम् ? पदार्थानामाविर्भाव एव सृष्टिः, स च ज्ञानार्हत्वरूप एव; तस्य च सदावर्तमानत्वेन तत्र प्रकृत्यादीनामनुत्पादात्, इति चेत्, न; अन्धकारस्थितघटाविर्भावार्थं प्रदीपानयनादिवैयर्थ्यापत्तेः । यद्यन्धकारव्याप्तस्य तस्य ज्ञानाभाव इति विभाव्यते, तदा तदर्थं यत्नासम्भव एव । अज्ञानार्थे प्रयत्नस्यादृष्टत्वात् । ज्ञानमस्तीति चेत्, वित्तिविषयरूपस्याविर्भावस्य सत्त्वात्तदर्थं यत्नो व्यर्थ एव । अतो न ज्ञानार्हत्वमाविर्भूतस्य लक्षणम्, किन्तु तत्तत्कार्यकारित्वम् । यथा जलाहरणादिकार्यकारित्वं घटस्य । अनाविर्भूतस्य तस्य मृद्रूपेणावस्थितस्य तत्कार्यकारित्वानुपपत्तेः । सृष्टेः प्रागपि ब्रह्मणः सदा प्रकटत्वेन पदार्थानां च कारण एवाव्यक्ततया स्थितत्वेन तेषां ज्ञानस्याप्यप्रकटतया सत्त्वान्न सार्वज्ञ्यबाधः ।

किञ्च, रमणाय हि सृष्टिः । रमणं चाविर्भूतैरेव पदार्थैर्नाऽनाऽऽविर्भूतैः । अत एव योगिनां योगजधर्मेण व्यतीतान्नादेर्ज्ञानेऽपि, न तैस्तेषां क्षुदपनोदनम् ।

नच प्रागभावचतुष्टयाङ्गीकारः, आभ्यामेव सुनिर्वाहात् । तत्र प्रागभावः कारणावस्थातो न भिन्नः । एवं ध्वंसोऽपि तिरोभाव एव । घटः पटो नेत्य-

## प्रजाया बहुविधत्वम्

**प्रकृतमनुसरामः। प्रजाया बहुविधत्वेन बहुवचनम्। तस्या बहुविधत्वं तु "तदात्मानꣳ स्वयमकुरुत" "सोऽकामयत बहु स्यां प्रजायेय" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिश्रुत्युपदिष्टपुष्टिप्रवाहमर्यादाभेदैः। अथवाऽनेकप्रकारककल्पभेदेनानेकविधया सिसृक्षया तथात्वम्। ताः प्रकटीकुर्व इत्यर्थः।**

---

घटः पटो न इत्यन्योन्याभावे घटे भगवदिच्छया घटत्वस्य तिरोभावः पटे च पटत्वस्य। सर्वस्य ब्रह्मात्मकत्वात्, तदिच्छाधीनत्वात्। अत एव वस्तुनोऽनुभवयोग्यत्वमाविर्भावत्वं तदयोग्यत्वं च तिरोभावत्वम् इति लक्षणं सङ्गच्छते। आविर्भावतिरोभावावपि शब्दाविरोधित्वादङ्गीकृतौ, न युक्तित इति तु प्रागेव प्रतिपादितम्। न वा तिरोभावोऽभावस्यैव पर्याय इति शङ्क्यम्। तिरोभावस्य भगवच्छक्तित्वेन पूर्वमेव प्रतिपादितत्वात्। न हि भावविरोधिनोऽभावस्य भगवच्छक्तिषु गणना भवति। शक्तिशक्तिमतोरभेदन्यायेन तिरोभावोऽपि भगवद्रूप एवेति वेदेनोच्यते। अतो नायमभावापरपर्याय इति ध्येयम्। ननु तिरोभाव एवाभावा अन्तर्भाव्यन्ते, घटानुपलब्धिरपि तिरोभावेनैव भवति, तर्हि कथमयमभावापरपर्यायो न भवेदिति चेच्छृणु, घटपटात्मकं जगद्भगवद्रूपम्, वस्तुतः सर्वेऽपि पदार्था ब्रह्मात्मका एव, तथापि गामानयेत्यादि वक्तव्ये ब्रह्मानयेत्युक्तौ बोधासम्भव एव। तेन सर्वेषां पदानां ब्रह्मणि विशिष्यशक्तिस्वीकारेऽपि घटादिषु शक्तिसङ्कोचेन तत्तत्पदार्थानां बोधः सुकरः। तथैव अभावस्य तिरोभावेऽन्तर्भावेऽपि न पर्यायवाचित्वम्।

**बहुवचनमिति**। पूर्वोत्तरकाण्डोक्तसृष्टिप्रतिपादकवाक्यैरित्यर्थः। "अप्सु सर्वं प्रतिष्ठितम्", "आपो वा इदमग्र आसीत्", "तत्तेजोऽसृजत्", "तोयेन जीवान् व्यससर्ज भूम्याम्" इत्यादिश्रुतिनिचयोक्तभूतभौतिकसृष्टिप्रतिपादकवाक्यानि "धाता यथापूर्वमकल्पयत्" "हिरण्यगर्भः समवर्तताग्रे" इत्यादिधातृपदविशेषितब्रह्मद्वारा सृष्टिकरणं पुराणेषूक्तं मन्वन्तरद्वाराऽनेकविधसृष्टिकरणं च निखिलमप्यत्र सङ्ग्राह्यम्। **पुष्टीति**। "जन्माद्यस्य यतः,

## नारायणात्प्राणो जायते,

### ( प्राणप्रादुर्भावः )

**नारायणात्सर्वेषां प्रादुर्भावमुपदिशति—नारायणात्प्राणो जायत इति। प्राणो हि आसन्यो जीववन्नित्यो गतिमानणुपरिमाणो जायते प्रादुर्भवति ।**

**नच "वृक्षादिकम्पनहेतुः शरीरान्तःसञ्चारी वायुः प्राणः" इतिनैयायिकनिरूपितवायुरूप इति शङ्क्यम् । प्राणस्य "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति श्रुतौ वायोः पार्थक्येनोपदेशात् । अतो मुख्यः प्राणः पदार्थान्तरमेव । नच "स वायुः स एष पञ्चविधः" इतिश्रुतिविरोध इति विभावनीयम् । तस्य भौतिकवायुभिन्नभगवत्प्राणात्मकवायुपरत्वेन निरूपणात् । न वै प्रमाणाभावोऽत्र शङ्क्यः । "अथ हेममासन्यं प्राणमूचुः" इति बृहदारण्यकीयोद्गीथब्राह्मणोपदिष्टस्य तस्येतरप्राणवैलक्षण्यस्यैव प्रमाणत्वात् । न च तस्याध्यात्म्यापत्त्या वैलक्षण्याभावेन दोषस्तदवस्थ इति मन्तव्यम् । तस्या नस्य प्राणेऽपि सत्त्वात् । अत्र श्रुतावपहतपाप्मत्वरूपासाधारणवैलक्षण्यस्योपदिष्टत्वाद्वस्त्वन्तरमेव ।**

---

प्राणप्रादुर्भावं प्रदर्शयन्ति—**नारायणादि**ति । ननु श्रुतौ "एतस्माज्जायते प्राणः" इत्यत्र प्राणस्य जन्यत्वमुच्यते, तेनास्य शरीरादिवदुत्पत्तिविनाशशालित्वं, न तु जीववन्नित्यत्वमिति चेत्, न, "तथा प्राणः" इति वैयासनयेन तस्य नित्यताया उक्तत्वात् । ननु "अथ ह प्राणा अहं श्रेयसि व्यूहिरे" इत्यादिश्रुतिषु प्राणशब्द इन्द्रियेषु प्रसिद्ध इति चेन्न, तत्र सामान्यतयोक्तत्वात्, मुख्यप्राणस्तु तद्भिन्न एव । "तथा प्राणः" इत्यधिकरणेऽपि प्राणशब्द इन्द्रियवाचकः, मुख्यप्राणोऽपि अविरोधस्य तुरीये पादे "तथा प्राणः" इत्यारभ्य जीवधर्मातिदेशस्योक्तत्वात् इन्द्रियादयो जीववन्नित्यगतिमदणुपरिमाणाश्चेति ज्ञापितमिति अस्माभिरप्यत्र सङ्गृहीतम् । मुख्यप्राणस्य नित्यत्वं तु "श्रेष्ठश्च" इत्यधिकरणे विचारितम् । "प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च" "आनीदवातं स्वधया तदेकं"इत्यादिना नित्यत्वं वायुभिन्नत्वं च प्रतिपादितम् । वैशेषिकमतं दूषयन्ति—**नचे**त्यादि**पदार्थान्तर मेवे**त्यन्तम् । श्रुतिविरोधं परिहरन्ति—**तस्ये**त्यादिना । श्रुतौ प्राणशब्दो भौतिकभिन्नप्राणत्वेनोपदिष्टः । अन्यथा वायुनैव तन्निर्वाहात्पृथगुपादानं व्यर्थमेव स्यात् । साङ्ख्यमतमुपन्यस्य निराकुर्वन्ति—**अत्रे**त्यादिना । तथाचोक्तं साङ्ख्यकारिकासु—"करणं त्रयोदशविधं तदाहरणधारणप्रकाशपरम् ।

नच मैत्रायण्युपनिषद्विरोधो विभावनीयः । तत्र "सोऽमन्यतैतासां प्रबोधनायाभ्यन्तरं विविशामीति स वायुरिवात्मानं कृत्वाऽऽभ्यन्तरं प्राविशत् स एको नाशकत् स पञ्चधाऽऽत्मानं विभज्य" इत्यादिना। इवेतिपदेन तत्समानाकारमात्रत्वस्य प्रतिपादितत्वान्न कोऽपि शङ्कावकाशः ।

अत्र साङ्ख्यास्तावदेवं मन्यन्ते पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनोबुद्ध्यहङ्कारा इत्यान्तरं त्रिकमेवं त्रयोदशविधं करणम् । त्रयोदशविधस्यापि करणस्य या साधारणी वृत्तिः प्राणाद्या प्राणनादिरूपा सैव पञ्चवायवः प्राणादय इति कथ्यते; अतः समस्तकरणवृत्तिरूपत्वमेव प्राणस्य । तन्न, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति श्रुतौ मन इन्द्रियादिभिर्भेदेन निर्देशात् । त्रयोदशविधकरणवृत्तित्वे शक्तिशक्तिमतोरभेदेनेन्द्रियादिभिः पृथगुक्तेर्विरोधाच्च ।

ननु "असद्वा इदमग्र आसीत्तदाहुः किं तदासीदृषयो वा व तेऽग्र आसीत्तदाहुः के ते ऋषय इति, प्राणा वा ऋषय इति" इत्यादिश्रुतिभिः सृष्टेः पूर्वमपि प्राणस्थित्या कथं तस्य प्रादुर्भाव इति चेत्, न, "नासदासीत्" इत्यत्र "आनीदवातं स्वधया तदेकम्" इतिश्रुत्या सृष्टिप्राक्काले वायुरूपत्वनिषेधपूर्वकमानीदित्युपदेशेन भगवदननात्मकधर्मतया मुख्यप्राणसत्तासिद्धेः । प्रादुर्भावोऽपि जीववद्व्युच्चरणमेव, नतूत्पत्तिः; बृहदारण्यकीयव्युच्चरणश्रुतौ तस्यापि निर्दिष्टत्वात् । निषेधस्तु स्वरूपोत्पत्तिविषयक एवेति विद्वद्भिः सद्भिरनुसन्धेयम् ।

स च आसन्यत्वान्मुख्यतो भगवदधीनो व्यवहारे जीवाधीनः, इति यथातथोपपादितं "चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः" इति वैयासन्यायभाष्ये श्रीमदाचार्यचरणैरिति ततोऽवगन्तव्यम् ।

---

पृथगुपदेशात् । अविरोधस्य चरमे पादे "न वायुक्रिये पृथगुपदेशात्" इति वैयासन्याये न्यायसाङ्ख्यतन्त्रयोरुक्तमतयोः खण्डनाच्च । विस्तरस्त्वविरोधतुरीयपादे द्रष्टव्यः । **चक्षुरादिवत्त्विति** । अयं न्यायोऽविरोधतुरीयपादे वर्तते । शिष्यादिभ्य इत्यपि पाठः । न चायं पाठः संशोधकप्रमादजन्य इति वाच्यम् श्रीमत्पुरुषोत्तमगुरुभिः श्रीकृष्णचन्द्रैर्भावप्रकाशिकायां तथा स्वीकारात् । तत्र सूत्रार्थस्तु 'पूर्वपक्षनिरासार्थस्तु शब्दः, चक्षुरादिवदयमप्यस्वतन्त्रः,

## मनः—––

प्राणप्रादुर्भावं प्रतिपाद्य मनसोऽपि निरूपयति–मन इति । तदप्यणुपरिमाणं प्राणवन्नित्यमुभयात्मकमिन्द्रियरूपमनिन्द्रियरूपञ्च ।

नच पीयूषलहर्यां मनसो नित्यत्वस्य खण्डितत्वादिह तस्य नित्यत्वस्य कथं सङ्गतिरिति शङ्क्यम् । तत्खण्डनस्यार्धवैनाशिकप्रक्रियाप्रतिपन्ननित्यत्वपरकत्वान्नानुयोगावकाशः ।

नचोभयात्मकत्वे भावाभावविरोधः शङ्क्यः । अविद्यावद्धर्मान्तरत्वेनाप्यनिन्द्रियत्वबोधस्य व्यक्तत्वात् । यथाहि–यमे देवत्वं पितृत्वं चेति द्वयमस्ति, तथात्रापि क्रियात्मकस्य ज्ञानमयत्वस्य च प्रवेशोऽपराहत एवेति । न काऽप्यनुपपत्तिः । अत्र विस्तरः पीयूषलहर्याम् ।

अत्र प्रस्थानरत्नाकरे पण्डितपुरन्दराः–"अथ मनः–तच्चोभयात्मकमुभयकार्यकर्तृत्वात् । तस्य च "सङ्कल्पविकल्पात्मकत्वम्" स्वरूपलक्षणम्, "काम-

---

रित्सञ्ज्ञालोपाभ्यामपहारे "शास इदङ्हलोः" इत्यनेनेत्वे "शासिवसिघसीनां च" इत्यनेन षत्वे च शिष्य इति रूपम्, शिष्टिश्च "क्तिन्नावादिभ्यः" इत्यनेन क्तिन् प्रत्यये पूर्वोक्तेत्वषत्वे च सिद्ध्यति । उभयोरप्येकार्थत्वाद्विरोधाभावाच्च न कश्चिद्दोषः ।

मनसः प्रादुर्भावं निरूपयन्ति—**मन इतीति** । **अणुपरिमाणमिति** । "अणवश्च" इति वैयासन्यायेन मनसोऽप्यणुत्वमेव । **नित्यमिति** । "तथा प्राणाः" इत्यतिदेशेनेत्यर्थः । **नचेति** । पीयूषलहर्यां "भक्तिरहस्यभजनम्, तदिहामुत्रोपाधिनैराश्येनैवामुष्यात्मनःकल्पनम्" इतिश्रुतौ सप्तचत्वारिंशत्तमे पृष्ठे ब्रह्मामृतभाष्ये "अन्ये तु" इत्यनेन पाठान्तमुपन्यस्य टीकायां मनसो विचारः प्रक्रान्तः । तत्रैव पीयूषलहर्यां अष्टाचत्वारिंशत्तमे पृष्ठे "तन्नित्यमिति केचित्" इत्याहुः । **अर्धवैनाशिकेति** । तन्मते नित्यत्वं च तस्यानाश्रितत्वात्, तस्यावयवकल्पनायां प्रमाणाभावादनाश्रितत्वमिति । "तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते" ( अ. ३ आ. २ सू. २ ) इत्याहुः कणभक्षपादाः । वायुनिरूपणावसरे च "अद्रव्यत्वेन नित्यत्वमुक्तम्" (अ. २ आ. २ सू. १३) परमाणुलक्षणस्य वायोरिति शेषः । द्रव्यं हि समवायिकारणासमवायिकारणान्यतरनाशान्नश्यति परमाणोस्तु निरवयवतया न तदुभयमस्ति तथाच विनाशकाभावान्न विनश्यतीति तत्रैव विश्वनाथपञ्चाननाः । एवं चार्धवैनाशिकमते निरवयवत्त्वेन हेतुना नित्यत्वं साध्यं तन्नेति ग्रन्थकृदभिप्रायः । अत्र श्रीमत्पुरुषोत्तमानामभि-

जनकत्वम्" कार्यलक्षणम् । एतदाध्यात्मिकं लक्षणद्वयम् । आधिदैविकं तु "अनिरुद्धाविर्भावस्थानत्वम्" भौतिकं तु "योगिभिः शनैः संराध्यत्वम्"

---

यत । यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः" इत्यत्र सुबोधिन्यां पूर्वार्धेन मनसो वैकारिकात्सात्त्विकाद्विकुर्वाणात्कालकृतगुणक्षोभयुक्ताद्भगवद्वीर्यसम्भवान्मनसः प्रादुर्भावं निरूप्योत्तरार्धेनाध्यात्मिकम्, आधिदैविकं तु "यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम्, शारदेन्दीवरश्यामं' इतिचरणत्रयेणोक्तमिन्द्रियनियामकत्वम् । भौतिकं तु "संराध्यं योगिभिः शनैः" इति तुरीयपादेनोक्तम् । एतानि चत्वार्यपि लक्षणानि श्रीभागवतसुबोधिन्युक्तान्येवेति ज्ञेयम् ।

काणादास्तु-"आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्" (अ. ३ आ. २ सू. १) आत्मेन्द्रियार्थसन्निकर्षे सति यस्मिन्निन्द्रियसन्निकृष्टे ज्ञानस्य भाव उत्पादः, असन्निकृष्टे ज्ञानस्याभावोऽनुत्पादस्तन्मन इत्याहुः । द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातित्वं मनस्त्वमित्यप्यौलूक्याः ।

गौतमीयाः-"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" (अ. १ आ. १ सू. १६) युगपच्च खलु घ्राणादीनां गन्धादीनां च सन्निकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते, तेनानुमीयते अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि यस्यासन्निधेर्नोत्पद्यते ज्ञानं सन्निधेश्चोत्पद्यत इतीत्याहुः ।

साङ्ख्यास्तु-"उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् । गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च" इति कारिकया बुद्धीन्द्रियकर्मेन्द्रियात्मकं सङ्कल्पेन रूपेण मनो लक्षयन्ति । सङ्कल्पनं चात्र 'इदमेवम्', 'नैवम्' इति विशेषणविशेष्यभावेन विवेचनम् ।

भाट्टास्तावदेवं मन्यन्ते-सुखाद्यपरोक्षज्ञानमेव मनसो लिङ्गम् ।

प्राभाकरास्तु-बुद्ध्यादिकार्यं स्वसमवायिकारणद्रव्यान्तरसंयोगासमवायिकारणकम्, नित्यद्रव्यगतानित्यविशेषगुणत्वात् पार्थिवपरमाणुगतरूपादिवत्; तद्द्रव्यं मनःशब्दाभिधेयम्, तच्च नित्यमित्यास्थेयम् । इतरथा तस्यापि कारणकल्पनाप्रसङ्गात् ।

ननु मनसोऽस्तित्वे किं मानम् ? न तावत्प्रत्यक्षम्, तस्यान्तर्वर्तित्वात्, नानुमानम् तस्य स्वतन्त्रद्रव्यत्वाभावात्, नोपमानम् रूपाभावात्, न च शब्दः श्रुतौ मनोलक्षणस्यानुक्तत्वात् इति चेन्मैवं वोचः । सर्वैरपि दर्शनकारैर्मनसोऽस्तित्वं स्वतन्त्रद्रव्यत्वं च स्वस्वप्रक्रियानुरूपं साध्यते । तत्र साङ्ख्यास्तावदेवं साधयन्ति-चक्षुरादीनां वागादीनां च मनोधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः ।

वैशेषिकास्त-सत्यप्यात्मेन्द्रियार्थसान्निध्ये ज्ञानसुखादीनामभूत्वोत्पत्तिदर्शनात् करणान्तर-

---

णुपरिमाणम् । अपसर्पणोपसर्पणवचनात्संयोगविभागौ । मूर्तत्वात्परत्वापरत्वे संस्कारश्च । अस्पर्शवत्त्वाद् द्रव्यानारम्भकत्वम् । क्रियावत्त्वान्मूर्तत्वम् । साधारणविग्रहवत्त्वप्रसङ्गादज्ञत्वम् । करणभावात्परार्थम् । गुणवत्त्वाद् द्रव्यम् । प्रयत्नादृष्टपरिग्रहवशादाशुसञ्चारी चेति । तत्कर्मापि—सविग्रहे मनसीन्द्रियान्तरसम्बन्धार्थं जाग्रतः कर्म, आत्ममनःसंयोगादिच्छाद्वेषपूर्वकप्रयत्नापेक्षात् अन्वभिप्रायमिन्द्रियान्तरेण विषयान्तरोपलब्धिदर्शनात् । सुप्तस्य प्रबोधकाले जीवनपूर्वकप्रयत्नापेक्षात् । अपसर्पणकर्मोपसर्पणकर्म चात्ममनःसंयोगाददृष्टापेक्षात् । कथम् ? यदा जीवनसहकारिणोर्धर्माधर्मयोरुपभोगात् प्रक्षयोऽन्योन्याभिभवो वा तदा जीवनसहाययोर्वैकल्यात्, तत्पूर्वकप्रयत्नवैकल्यात् प्राणनिरोधे सत्यन्याभ्यां लब्धवृत्तिभ्यां धर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतशरीराद्विभागकरणमपसर्पणकर्मोत्पद्यते । ततः शरीराद्बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां समुत्पन्नेनातिवाहिकशरीरेण सम्बध्यते तत्सङ्क्रान्तं च स्वर्गं नरकं वा गत्वा आशयानुरूपेण शरीरेण सम्बध्यते तत्संयोगार्थं कर्मोपसर्पणमिति । योगिनां च बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनं च । तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्मादृष्टकारितम् । एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम् । यथा सर्गादावणुकर्म अग्निवाय्वोरूर्ध्वतिर्यग्गमने महाभूतानां प्रक्षोभणम् अभिषिक्तानां मणीनां तस्करं प्रति गमनम् । अयसोऽयस्कान्ताभिसर्पणं चेति । ननु मनो वैभवेऽपि करणधर्मत्वादेव ज्ञानयौगपद्यमुपपद्यते, किञ्च मनो विभुविशेषगुणशून्यद्रव्यत्वात् कालवत्, ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवत्, स्पर्शात्यन्ताभाववत्त्वादाकाशवदित्यादिवैभवसाधकं प्रमाणमिति चेत्, मैवम्; यदि मनो विभु स्यात्तदा सर्वेन्द्रियसन्निकृष्टात्ततः सर्वेन्द्रियकमेकमेव ज्ञानं स्यात् । कार्यविरोधान्नैवमिति चेन्न, न हि सामग्रीविरोधाविरोधमाकलयति येन चाक्षुषत्वरासनत्वादिविरोधाय बिभ्येत्, चित्ररूपवत् चित्राकारमेव वा स्यात् । भवत्येव दीर्घशष्कुलीभक्षणस्थले इति चेन्न, तत्रापि व्यासङ्गदर्शनात् । तर्हि रूपरसगन्धस्पर्शान् युगपत् प्रत्येमीति कथमनुव्यवसाय इति चेन्न; शीघ्रसञ्चारिमनोजनितेषु पञ्चसु स्मृत्युपनीतज्ञानेषु यौगपद्याभिधानात् । व्यासङ्गोऽपि करणधर्माधीन इति चेन्न उक्तोत्तरत्वात् । बुभुत्साधीनो व्यासङ्ग इति चेन्न; सर्वबुभुत्साया सर्वविषयकसर्वोदयप्रसङ्गात् । बुभुत्साया अपि अभिमतार्थग्राहीन्द्रियमनःसम्बन्धमात्रफलकत्वात्, तस्माज्ज्ञानायौगपद्यान्यथानुपपत्त्या सिद्धत्यणु मनः । अतो धर्मिग्राहकमानबाधिता वैभवः । किञ्च, मनो वैभवे पादे मे सुखं शिरसि वेदनेति प्रादेशिकत्वं सुखादीनां न स्यात् विभुकार्य्याणामसमवायिकारणावच्छिन्नदेशे उत्पाद-

मनःसंयोगोऽपि कथं स्यात्? अजौ साविति चेन्न, विभागस्यापि अजत्वप्रसङ्गात्। अवच्छेदभेदेनोभावप्यविरुद्धाविति चेन्न, संयोगविभागयोरवच्छेदभेदस्य स्वकरणाधीनत्वात्, अजयोस्तु तदभावादिति। ननु मनो विभु सर्वदा निःस्पर्शद्रव्यत्वात् आकाशवत् ज्ञानाद्यसमवायिकारणसंयोगाधारत्वादात्मवदित्याकाशात्मनोः साहचर्येण मनोपि किं नोक्तमित्यत्र "तदभावादणु मनः" इति सूत्रयाञ्चक्रुः श्रीमन्तः कणभक्षचरणाः। सूत्रार्थस्तु–तस्य विभवस्य सर्वमूर्तसंयोगित्वस्याभावादणु मन इति।

भाट्टास्तु–मनःसद्भावे सुखादिज्ञानमेव प्रमाणम्, अपरोक्षावभासज्ञानस्येन्द्रियाधीनतया रूपादिज्ञानेषु व्याप्तिदर्शनात् सुखादिविषयमपरोक्षज्ञानमिन्द्रियमनुमापयति। तत्र चक्षुरादीनामसम्भवात्तेभ्योऽन्यदवतिष्ठते। अत्र कश्चित्–नित्यद्रव्यगतविशेषगुणत्वात्सुखादीनां द्रव्यान्तरसंयोगजत्वम्, पार्थिवपरमाणुगतरूपादीनामग्निसंयोगजकत्वदर्शनात्, यच्च द्रव्यान्तरं मनस्तन्न युक्तम्। शरीरं हि भोगायतनम्। किञ्च भोगायतनत्वमन्यत् तत्संयोगापेक्षसुखाद्युत्पत्तेः, अशितपीताद्याधारत्वाच्च न बहिःशरीरात्सुखाद्युत्पत्तिः। अतः शरीरसंयोगादेव सिद्धेर्न द्रव्यान्तरानुमानम्। किञ्च पार्थिवगुणानामेव द्रव्यान्तरसंयोगापेक्षा दृष्टा न द्रव्यमात्रगुणानाम्। तेजःसंयोग एव च कारणतया दृष्टो न द्रव्यमात्रसंयोगस्तस्मान्नैवं मनःसिद्धिरिति सुखाद्यपरोक्षज्ञानमेव मनसोलिङ्गम्। मनस्तु पृथिव्यादीनामेवान्यतमात्मकं तेभ्योन्यद्वा सर्वथा तावदस्ति मनः। तच्चात्मतद्गुणेष्वेव स्वतन्त्रं प्रवर्तते न बाह्येषु रूपादिष्वित्यान्तरमित्युच्यते। रूपादिज्ञानेष्वपि तच्चक्षुरादिसहायं प्रवर्तते, एवमनुमानादिष्वपि लिङ्गादिसहायम्, अन्यमनस्कस्य सम्प्रयुक्तेष्वपि रूपादिषु ज्ञानानुत्पत्तेः। स्मृतावपि संस्कारपरतन्त्रं प्रवर्तते न स्वतन्त्रम्। नन्वनुमानादीनां मनोजन्यत्वात्तेषां च भूतभविष्यतोरपि प्रवृत्तेरिन्द्रियजन्यत्वं विद्यमानोपलम्भनत्वेनानैकान्तिकं स्यात्। न स्यात्। नहीन्द्रियजन्यत्वं हेतुः किन्त्विन्द्रियसम्प्रयोजत्वम्। न चानुमानेऽतीताया भविष्यन्त्या वा वृष्टेरनुमीयमानाया मनसा सम्प्रयोगोऽस्तीत्यव्यभिचारः इति मन्यन्ते।

प्राभाकरास्तावत्–इदानीं मनःसद्भावोऽणुपरिमितत्वं च साध्यते इत्युपक्रम्य तल्लक्षणं चोक्त्वा नित्यं च द्रव्यमणुरूपं विभु रूपं वा भवतीत्याशङ्क्य, तस्य विभुत्वमयुक्तम्, संयोगाभावप्रसङ्गात्; संयोगस्य साक्षाद्वा परम्परया वा क्रियैव कारणम्, सम्प्रतिपन्ने संयोगे तथा दर्शनात्। नच नैरन्तर्यमात्रं संयोगः, गुणगुणिनोरपि संयोगप्रसङ्गात्। नच द्रव्यनैरन्तर्यम्, अवयवावयविनोर्व्यभिचारात्। अप्राप्तयोरेव द्रव्ययोः प्राप्तिः संयोगः; स च विभु-

मितिवत् । ततश्चान्यत्र संयोगः क्रियाजन्यत्वेन दृष्टः, विभुद्वये तु संयोगे साध्ये कारणाभावात् कार्याभावानुमानबाधाद्बाधितविषयत्वम् । अतो न विभुनोः संयोगः ।

यच्च विभुत्वसाधकमनुमानं, मनो विभु, ज्ञानसमवायिकारणसंयोगाश्रयत्वादात्मवत्, द्रव्यत्वे सति द्रव्यानारम्भकद्रव्यत्वादाकाशवत्, द्रव्यत्वे सति भूतत्वादाकाशवत्, स्पर्शशून्यत्वे सतीन्द्रियत्वाच्छ्रोत्रवत् इत्यादि, तत्सर्वं धर्मिग्राहकप्रमाणविरोधादेवापास्तम्, संयोगार्थत्वान्मनःकल्पनायाः, अतः पारिशेष्यादणुत्वमेव निश्चीयते, तर्हि पार्थिवाद्यणुरेवास्तु, न द्रव्यान्तरं मनः इति चेन्न, पार्थिवाद्यणूनां द्रव्यारम्भकत्वनियमात्, मनसश्च न द्रव्यारम्भकत्वम्, स्पर्शशून्यत्वादिति । किञ्च, विवादाध्यासितत्वात्पार्थिवादिद्रव्ययोगो न ज्ञानसमवायिकारणम्, पार्थिवादिद्रव्यसंयोगादितरपार्थिवादिद्रव्यसंयोगवत्, द्रव्यान्तरसंयोगवद्वा । विभुत्वपक्षे दिगात्मसंयोगो वा भवतु, कालात्मसंयोगो वा किं द्रव्यान्तरेण मनसेति तुल्योऽयमनुयोगः । अतो मनसोऽस्तित्वमणुत्वं च सिद्धम् ।

श्रुतिस्तु—"कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इत्याह मनसो रूपम् । तदस्तित्वं च "अन्यत्र मना अभूवं नादर्शमन्यत्र मना अभूवं नाश्रौषम्" इति । कामादीनां लक्षणान्युक्तानि शङ्कराचार्यैः । तथाहि—कामः स्त्रीव्यतिकराभिलाषादिः । सङ्कल्पः प्रत्युपस्थितविषयविकल्पनं शुक्लनीलादिभेदेन । विचिकित्सा संशयज्ञानम् । श्रद्धाऽदृष्टार्थेषु कर्मस्वास्तिक्यबुद्धिर्देवतादिषु च । अश्रद्धा तद्विपरीता बुद्धिः । धृतिर्धारणं देहाद्यवसाद उत्तम्भनम् । अधृतिस्तद्विपर्ययः । ह्रीर्लज्जा । धीः प्रज्ञा । भीर्भयमित्येतदेवमादिकं सर्वं मन एव मनसोऽन्तःकरणस्य रूपाण्येतानि ।

अत्रैव सुरेश्वराचार्याः—

मनसोऽस्तित्वसिद्ध्यर्थं श्रुत्योपन्यस्यतेऽनुमा । सतश्च तस्य कामादिरूपाण्यपि च वक्ष्यति ॥
अविद्याधिकृतावस्थां धर्मधर्म्यादिसङ्गतिः । अविद्याकार्यसंस्थैव नत्वसौ प्रत्यगात्मनः ॥
इत्येतत्प्रतिपत्त्यर्थं परो ग्रन्थोऽवतार्यते । मा भूत्कामादिधर्मित्वमात्मनीति प्रयत्यते ॥
पृष्टो जरद्गवं यान्तमद्राक्षीस्त्वमितीतरः । ततोऽन्यत्र मना आसं नातोऽद्राक्षमुदीरितम् ॥
विषयान्तरसम्बद्धं मनो दृष्टं घटादिकम् । आत्मैकसाक्षिकं तच्च ह्युक्तार्थापत्तिसंश्रयात् ॥
अस्यात्मा चित्स्वभावोऽत्र चक्षुश्चाविकलं तथा । सप्रकाशं गवाश्वं च नच पश्यति चेतनः ॥
अतोऽनुमीयतेऽस्त्यन्यद्यस्मिन्नसति नेक्षते । द्रष्ट्रादिसंहतं सर्वं यस्मिँश्च सति वीक्षते ॥
यत्तदस्ति मनस्तत्स्यात्प्रसिद्ध्या चास्ति तन्मनः । अभून्मम मनोन्यत्र यतो नाद्राक्षमित्यतः ॥

विषयाभिलाषः कामस्तान्न विशेषेऽस्ति कारणम्। इन्द्रियालोचितार्थस्य स्यात्सङ्कल्पोऽवधारणम्
अनिश्चयात्मिका वृत्तिर्विचिकित्सेत्युदाहृता। आस्तिक्यबुद्धिः श्रद्धा स्यादश्रद्धा तद्विरोधिनी ॥
धृतिश्रद्धे विना न स्युः कामाद्याः कारणादृते। यतो कामादयोऽप्यत्र ह्युक्ता एवार्थतोऽमताः ॥
धारणं च धृतिर्ज्ञेया बुद्ध्योपात्तस्य वस्तुनः। विपर्ययो धृतिस्तस्या ह्रीर्लज्जेत्यभिधीयते ॥
विज्ञानं निश्चितं धीः स्याद्भयं भीरभिधीयते। एतत्सर्वं मनो ज्ञेयमिति तादात्म्यमुच्यते ॥
बुद्धेश्च मनसश्चैक्यं विवक्षित्वोपसंहृतिः। इन्द्रियाण्यपि सर्वाणि स्वान्तस्यैव तु वृत्तयः ॥
यतः स्वकार्यनिर्देशः स्वान्तस्य स्पर्शनेन्द्रिये। मन एव ततो ज्ञेयं शरीरेन्द्रियसंहृतिः ॥
पुंसो भोगप्रसिध्यर्थं वैचित्र्यं धीर्निगच्छति। देहेन्द्रियाद्यवस्थाभिरतो धीः सर्वमेव तु ॥
जिघ्रन्ती भवति घ्राणं पश्यन्ती चक्षुरुच्यते। शृण्वन्ती भवति श्रोत्रमिति व्यासोऽप्यभाषत॥
शुक्लं कृष्णमणु स्थूलमिति धीः कर्मणो वशात्। द्वैताधिकारमापन्ना वैश्वरूप्यं निगच्छति ॥
प्रत्यक्चिदेशभेदेन नहि शुक्लादिवस्तुनः। सत्तासम्भाव्यतेऽन्यत्र प्रत्यग्वद्बाह्यवस्तुनः ॥
नातः शुक्लादिवस्त्वस्ति बुद्धिरेव क्रियावशात्। शुक्लादिरूपतामेति पुरुषार्थप्रसिद्धये ॥
धीर्विपर्ययरूपेयं यतः शुक्लादिरूपिणी। मन एवेत्यतः प्राज्ञाः सर्वरूपं प्रचक्षते ॥
आत्मार्थेनैव सत्यत्वं कृत्स्नात्मीयस्य वस्तुनः। तस्य तन्मात्रयाथात्म्यादिति पूर्वमवादिषम् ॥
अपि सर्वाणीन्द्रियाणि मन एव यतस्ततः। पृष्ठतोऽपि नरः स्पृष्टो मनसैव प्रपद्यते ॥
पराङ्मुख उपस्पृष्टः पाणेः स्पर्शोयमीदृशः। इति स्पर्शविशेषं ना मनसैव प्रपद्यते ॥
त्वचोपस्पृष्टिमात्रेण स्पर्शमात्रं प्रपद्यते। स्पर्शनादिविशेषं तु मनसैव प्रपद्यते ॥
मनसैव यतोऽशेषकरणस्वार्थधीभवः। सर्वं हि मन एवेति श्रुतिराह वचस्ततः ॥" इति।

यत्तु धर्मराजाध्वरीन्द्रा एतस्यानिन्द्रियत्वमेव साधयन्ति, न तावदन्तःकरणमिन्द्रियमित्यत्र मानमित्यादिना। तन्न युक्तम्। तस्य उभयात्मकत्वात्। इन्द्रियरूपत्वं तु यैर्वाक्यैर्धर्मराजाध्वरीन्द्रा निषेधन्ति तैरेव वाक्यैः शङ्कराचार्याः प्रतिपादयन्तीति तन्मते महानयं दोषो मूले कुठारवदापतति। तथा हि—"मनःषष्ठानीन्द्रियाणि" इति भगवद्गीतावचनं प्रमाणमिति चेन्न अनिन्द्रियेणापि मनसा षट्त्वसङ्ख्यापूरणाविरोधात् इति धर्मराजाध्वरीन्द्राः। शङ्कराचार्यास्तु गीताभाष्ये—"मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि" इति श्रोत्रादिसमभिव्याहृतस्य मनस इन्द्रियत्वं स्पष्टमेव। न च शेषभक्षणाधिकरणन्यायेन षट्त्वसङ्ख्यापूर्तौ मनसोऽनिन्द्रियत्वमिति वाच्यम्। "इन्द्रियाणां मनश्चास्मि" इत्यत्रापि शङ्कराचार्याः "इन्द्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि सङ्कल्पविकल्पात्मकं मनश्चास्मि" इत्याहुः। एवमेव "इन्द्रि-

तदुक्तम्—"यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः" इत्यादिना । एतस्येन्द्रियत्वं प्रत्यक्षखण्ड एव विचारितम् । इदञ्च नेन्द्रियम् "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः", "मनः सर्वेन्द्रियाणि च" इत्यादिश्रुतेः । "मनःषष्ठानीन्द्रियाणि" इति भगवद्वाक्यं तु "यजमानपञ्चमा इडां भक्षयन्ति" इत्यत्र अनृत्विक्त्वेऽपि यजमानस्य पञ्चमत्वसङ्ख्यापूरकत्ववन्मनसः षट्त्वसङ्ख्यापूरकत्वेनाप्युपपत्तेः । "इन्द्रियाणां मनश्चास्मि" इति तु "नक्षत्राणामहं शशी" इतिवन्नियामकस्वविभूतिकथनमात्रपरमिति न तज्जातीयता । अन्यथा "ज्ञानं ज्ञानवतामहम्" इति वाक्येन ज्ञानेऽपि ज्ञानवत्तापादानप्रसङ्गात् । "इन्द्रियाणि दशैकं च" इत्यादावपि व्यवहारस्त्विन्द्रियनियामकत्वनिबन्धनः । क्रियाज्ञानमयत्वे 'सङ्कल्पयामि' इत्यनुव्यवसायात्स्वगम्यं मनः 'आत्मनाऽऽत्मानं वेत्सि' इत्यत्र आत्मन इवोपाधिभेदेनैकस्यापि मनसः प्रमेयत्वप्रमाणत्वयोरुपपत्तेः । योगजधर्मसहकृतेन तेनातीन्द्रियज्ञाने स्वविषयज्ञानस्य सुवचत्वात् । "अनागतमतीतं च वर्तमानमतीन्द्रियम् । विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः" इति वाक्यात्, यामीति मम मनोऽस्तीत्यभिलापादपि तथा । एवं च "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येत-

---

कोऽयं व्यपदेशः । ते प्राकृताः प्राणाः श्रेष्ठं वर्जयित्वावशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते । श्रुतावेवं व्यपदेशदर्शनात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति ह्येवञ्जातीयकेषु प्रदेशेषु पृथक्प्राणो व्यपदिश्यते पृथक् चेन्द्रियाणि । ननु मनसोऽप्येवं सति वर्जनमिन्द्रियत्वेन प्राणवत्स्यात्, 'मनः सर्वेन्द्रियाणि च' इति पृथग्व्यपदेशदर्शनात् । सत्यमेतत् । स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत्सङ्गृह्यते । प्राणस्य त्विन्द्रियत्वेन न श्रुतौ स्मृतौ वा प्रसिद्धिरस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्ष उपपद्यते । तत्त्वैकत्वे तु स एवैकः सन्प्राण इन्द्रियव्यपदेशं लभते न लभते चेति विप्रतिषिद्धम् । तस्मात्तत्त्वान्तरभूता मुख्यादितरे" इति श्रीशङ्कराचार्याः । सुरेश्वराचार्या अपि मनस इन्द्रियरूपत्वं स्वीकुर्वन्ति, तदुपरिष्टात् तेषामेव वार्तिकवाक्यान्युद्धृत्य प्रतिपादितम् । भागवतेऽपि पुरञ्जनोपाख्याने "एकादशेन्द्रियचमूः" इत्युक्तम् । इन्द्रियलक्षणमप्यत्र सम्भवति । तल्लक्षणं तु देहस्थत्वे सति ज्ञानक्रियान्यतरकरणत्वम् । विस्तरस्त्वग्रे द्रष्टव्यः । एतत्प्रत्यक्षखण्डे प्रतिपादितमित्याहुः **एतस्येति** । यथा मुख्यप्राणस्य भगवदधीनत्वाद्वायुभिन्नत्वं तथास्यापि मनसोऽनिन्द्रियत्वमपि प्रतिपादयन्ति

सर्वेन्द्रियाणि च,

त्सर्वं मन एव" इति श्रुतौ प्रकारवाचकेतिशब्दप्रयोगात्कामादितुल्याः सुख-दुःखप्रयत्नद्वेषादृष्टस्नेहाद्या अनुक्ता अपि मनस एव गुणा ज्ञेया न त्वात्मनः। शाण्डिल्यशतसूत्रीयभाष्ये त्वनुमानमपि दर्शितम्। तथाहि–सुखादयो न साक्षा-दात्मविकाराः, आत्मनि प्रतीयमानत्वात्, गौरत्वादिवत्। सुखाद्युपलब्धिः सकरणिका क्रियात्वात्, छिदिक्रियावत्, इत्यत्र लाघवात्। समवायेनैव करणजन्यत्वं युज्यते, श्रोत्रजन्यत्वमिव शब्दस्य, सुखादयः करणसमवेताः, घ्राणादीन्द्रियग्राह्यगुणत्वात्, स्पर्शशून्येन्द्रियग्राह्यगुणत्वाद्वा, शब्दवदिति। शास्त्रान्तरे तु "स्मृत्याद्यनुमेयं मनः" तच्च सकलशरीरव्यापि मनोरथाभिमानि-कसुखदर्शनाद्यापकम्, इति मीमांसकाः। अन्ये तु करणत्वात्सक्रियत्वादुत्क्र-मणादिश्रुतेर्मनो गच्छतीति व्यवहाराच्चाणुपरिमाणमाहुः। तत्रापि नित्यमित्य-र्धवैनाशिकाः, अनित्यमिति साङ्ख्याद्याः। सिद्धान्ते तु चन्द्रदेवताकत्वान्नाना-किरणशालि "एतस्माज्जायते" "तन्मनोऽसृजत्" इतिश्रुत्या जन्यम् "तथा प्राणः" इत्यधिकरणे जीवातिदेशेनाणुत्वादेर्व्यवस्थापनादणुपरिमाणम्, आभि-मानिकसुखं सामर्थ्यादेवोपपद्यमानम्। तस्य च रूपद्वयम्, आन्तरं बाह्यं चेति प्रत्यक्षखण्डे ज्ञानप्रक्रियायामेव निरूपितम्। सामर्थ्यादेवाभिमानिकादिसुखो-पपत्तेः श्रुत्यैवाणुत्वादिकं सिद्ध्यतीति सङ्क्षेपः। अस्यापि गोलकं हृदयम्।" इति प्राहुः।

मनसः प्रादुर्भावं निरूप्य सर्वेन्द्रियाणामुपदिशति—सर्वेन्द्रियाणि चेति।

---

जधर्मसहितमेव प्रमाणमन्यत्र त्वप्रमाणम्" इति सुबोधिन्यामाचार्यचरणाः। सिद्धान्ते मनसः स्वरूपमाहुः—**चन्द्रदेवताकत्वादि**त्यादिना। "मनसश्चन्द्रमा जातः" इति तृतीय-स्कन्धषड्विंशाध्यायवाक्ये "मनसः सकाशाज्जातश्चन्द्रमास्तस्य देवः" इति श्रीमदाचार्यचरणाः सुबोधिन्यामूचुः। तस्मिन्नेवाध्याये "हृदयं मनसा चन्द्रो नोदतिष्ठत्तदा विराट्" इत्यत्रापि तस्य चन्द्रदेवताकत्वं श्रीव्यासेनोक्तमेव। "मनश्चन्द्रशरीरं च मनोऽस्माकं तथैव च" "चन्द्रश्चन्द्राभिमानी च मनःप्रेरक एव नः" इति निबन्धीयवाक्याच्च।

**गोलकमिति**। तृतीयस्कन्धे "हृदयं मनसा" इत्यत्रोक्तमित्यर्थः। "हृदयं चास्य निर्भिन्नं चन्द्रमा धिष्ण्यमाविशत। मनसांशेन येनासौ विक्रियां प्रतिपद्यते" इत्यत्र सुबोधिन्यां

एकादशसङ्ख्याकान्यणुपरिमाणानि प्राणवन्नित्यानि च । एकादशत्वं तु पञ्च-कर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि मनश्चेति भेदात् ।

ननु कथमिन्द्रियाणामेकादशत्वम् "सप्त प्राणा प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त जिह्वाः" "अष्टौ ग्रहा अष्टावति ग्रहा इति" "सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" इति, "नव वै पुरुषे प्राणा नाभिर्दशमी" दश वै पशोः प्राणा आत्मैकादश" इतिश्रुतिभिर्नानासङ्ख्या श्रावणेनैकतरपक्षनिर्धारणस्या-शक्यत्वात् । "सप्त इह लोका येषु सञ्चरतीह प्राणा गुहाशया निहिताः सप्त

---

करणे प्रतिपादितमणुपरिमाणमाहुः—**अणुपरिमाणानी**ति । एकादशत्वं प्रदर्शयन्ति—**एकादशत्वे त्वि**ति । ननु "नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च खं वायुर्ज्योति-रापः पृथ्वी विश्वस्य धारिणी" इति श्रुतौ मनसः पृथग्व्यपदेशात्सर्वेन्द्रियाणि चेत्यत्र दशानामे-वेन्द्रियाणां श्रवणं स्यान्नत्वेकादशानाम्, इति चेत्, सत्यम्; अत्र मनसः प्रमेयरूपत्वेनोक्त-त्वात्तदनिन्द्रियम्, प्रमाणरूपस्येन्द्रियेषु गणनायामेकादशेन्द्रियाणि । अत एव पूर्वं मनस इन्द्रियरूपत्वमनिन्द्रियरूपत्वं चोक्तम् । अनिन्द्रियरूपस्य विशेषतः खण्डनप्रयोजनं तु वेदा-न्तपरिभाषाकारसम्मतमनिन्द्रियत्वं शाङ्करभाष्यविरुद्धमिति तन्मते मूले कुठारपातवन्महान्दोषः समुत्पततीत्येव । **सप्त प्राणाः प्रभवन्ति तस्मादि**ति । द्वितीयमुण्डके श्रुतिरियम् । चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति । क्वचिदष्टौ प्राणा ग्रहत्वेन बन्धनेन गुणेन सङ्कीर्त्यन्ते—**अष्टौ ग्रहा** इति । इयं श्रुतिर्बृहदारण्यके तृतीयाध्याये द्वितीयब्राह्मणारम्भे दृश्यते । तत्राष्टौ ग्रहा अष्टावतिग्रहा व्याख्याताः । तद्यथा—घ्राणरसनत्वक्चक्षुःश्रोत्रमनोहस्तत्वगिति, त एते ग्रहाः । एषां तु विषया अतिग्रहास्त्वष्टावेव । तथाहि—(१) "प्राणो वै ग्रहः सोऽपानेना-तिग्राहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति । (२) वाग्वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति । (३) जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति । (४) चक्षुर्वै ग्रहः स रसेनातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति । (५) श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति । (६) मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते (७) हस्तो वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्याँ हि कर्म करोति । (८) त्वग्वै ग्रहः स स्पर्शेनाति-ग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ।" इति । तैत्तिरीय-संहितायां नव । तथाहि—**सप्त वै शीर्षण्या** इति । द्वे श्रोत्रे द्वे चक्षुषी द्वे घ्राणे एका-वाक्गिति सप्त पायूपस्थौ—बुद्धिमनसी वा द्वाववाञ्चाविति नव । क्वचिद्दशेत्याहुः—**नवे**ति ।

सप्त" इतिश्रुतौ सप्तानामेव गतिनिर्देशात् सप्तैव सङ्ख्या तेषां युक्तेति चेत्, न; चक्षुरादिसप्तगणनायां "हस्तौ चादातव्यं च, उपस्थं चानन्दायितव्यं च, पायुश्च विसर्जयितव्यं च, पादौ च गन्तव्यं च" इति मन्त्रे चतुर्णामपीन्द्रियत्वेन गणितत्वादेकादशत्वमक्षुण्णमेव ।

नच तर्हि सप्तादिगणनाया असङ्गतिरिति वाच्यम्, सप्तगणनायाश्चक्षुस्त्वग्घ्राणरसनश्रवणमनोवाचामन्येन्द्रियाणामनल्पोपकारजनकत्वेनैतेषां मुख्यत्वसूचकत्वेन, अष्टगणनायाश्च ग्रहपदोक्त्या तेषां शास्त्रप्रसिद्धबन्धकत्वख्यापनपरत्वेन नवगणनाया अनावृतनवद्वारप्रदर्शकत्वेन, दशगणनायाश्च केवलद्वारमात्रप्रकटनेन, एकादशसङ्ख्यायामिमा अपि सम्भवन्तीत्यभिप्रायकत्वात्तस्याः सङ्गतेरबाधात् । क्वचिच्चतुर्दशसङ्ख्याकथनमप्यन्तःकरणचतुष्टयसमन्वितत्वबोधनायेति ध्येयम् ।

नच तर्हि कथमेकादशत्वमेवेति निश्चय इति शङ्क्यम्, "ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः" इत्युपक्रम्य क्षेत्रनिरूपणे "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इत्यनेनाहङ्कारप्रभृतीन्पृथक्तयाऽऽज्ञाप्य "इन्द्रियाणि दशैकं च" इत्याज्ञया ब्रह्मसूत्रपदेष्वेकादशैवेन्द्रियाणीति भगवतैव निर्णीतत्वात् ।

नचेन्द्रियाणां प्राणपदावाच्यत्वमिति विभावनीयम्, तेषां प्रियत्वबोधनाय वेदे तथा प्रयोगात् । तस्य "अथ ह प्राणा अहं श्रेयसि व्यूहिरे" इत्यत्रेन्द्रियाणां प्राणपदवाच्यत्वस्य स्फुटत्वाच्च ।

अत्र विद्वन्मुकुटमणयः प्रस्थानरत्नाकरे "अथेन्द्रियाणां लक्षणानि । तत्र तैजसाहङ्कारोपादेयत्वे सति ज्ञानक्रियान्यतरकरणमिन्द्रियम् । घरट्टयन्त्रा-

---

समादधते—**चक्षुरादिसप्तगणनायामिति** । पुनः शङ्कते **नचेति** । गीताप्रमाणमाहुः—**ऋषिभिरित्यादिना** । ब्रह्मसूत्रेष्वपि "हस्तादयस्तु स्थितेऽतो नैवम्" इत्यत्रैकादशसङ्ख्याया एव समर्थितत्वात् । सप्तादिगणनायाः सङ्गतिमाहुः—**नचेत्यादि ध्येयमित्यन्तम्** । इन्द्रियाणां प्राणपदावाच्यत्वं परिहरन्ति—**तेषामित्यादिना** ।

दिक्रियाजनकवाय्वादिवारणाय सत्यन्तम् । घ्राणबुद्धिवारणाय शेषम्, देहसंयुक्तत्वे सति स्वफलेनात्मज्ञापकत्वं वा । इदमेव मुख्यं लक्षणम् । साक्षाद्व्युच्चरणेऽपि समन्वयात्कालिकव्याप्तेरदुष्टत्वाच्चेति ।

( अत्र मतान्तराणि )

**मीमांसकास्तु**—यत्सम्प्रयुक्तेऽर्थे विशदावभासं ज्ञानं जनयति तदिन्द्रियम् ।

**नैयायिकास्तु**—शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनः-

---

यतो भवः । मनसश्चेन्द्रियाणां च भूतानां महतामपि" "तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ।" इत्याद्युक्तेस्तैजसाहङ्कार एवेन्द्रियाणामुपादानकारणम् । करणत्वं तु "कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम्" इत्युक्तेः । व्यापारवदसाधारणं कारणं करणम् । ज्ञानं प्रति ज्ञानेन्द्रियाणां क्रियां प्रतिकर्मेन्द्रियाणां करणत्वमिति बोधनाय ज्ञानक्रियान्यतरेति । घ्राणबुद्धिवारणाय करणेति । क्रियाज्ञानविभागश इत्यत्रोक्तं राजसाहङ्कारोपादेयत्वं क्रियावत्त्वं ज्ञानवत्त्वं च तयोः । करणं तु साधकतमम् । तच्चेन्द्रियाण्येवेति ज्ञापनायेति वा ।

ननु प्रकृते नारायणादेवेन्द्रियाणामुत्पत्तिरुच्यते, नतु राजसाहङ्कारादिति लक्षणासङ्गतिरिति चेल्लक्षणान्तरं गृहाण **देहे**ति । **साक्षाद्व्युच्चरणे**त्यादिना । "यथाग्नेः क्षुद्रा विस्फुलिङ्गाः" इति श्रुतेः । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति श्रुतिरपि विस्फुलिङ्गसदृशीति श्रीमदाचार्यपादा अविरोधचतुर्थे तत्प्राक्श्रुतेश्चेत्यत्राहुः । एवं च यथा विस्फुलिङ्गवाक्ये व्युच्चरणं तथाच प्रादुर्भावः । एवमेव स प्राणमसृजतेत्यादयः । प्रकृतेऽपि नारायणात्सर्वेषां प्रादुर्भावस्योक्त्या विस्फुलिङ्गश्रुतिसादृश्यम् । स्वफलेनात्मज्ञापकत्वं योगादीनामपीति तद्वारणाय सत्यन्तम् । देहसंयुक्तत्वे सत्यात्मज्ञापकत्वं बुद्धेरपीति तद्वारणाय स्वफलेनेति ।

मतान्तराण्याहुः—**मीमांसके**त्यादिना । **यत्प्रयुक्ते**ति । मीमांसकमते षण्णामेवाङ्गीकारात् ।

**शब्देतरे**ति । विश्वनाथपञ्चाननेन सङ्गृहीतं मुक्तावलीस्थं लक्षणमिदम् । एतन्मते कर्मेन्द्रियाणां भौतिकत्वाज्ज्ञानेन्द्रियाणामेवेदं लक्षणम् मनसश्चानिन्द्रियत्वात् । आत्मादावतिव्याप्तिवारणाय सत्यन्तम् । आदिपदेन चर्ममनःसंयोगस्य ज्ञानकारणत्वपक्षे तत्सङ्ग्रहः । उद्भूतविशेषगुणस्य श्रोत्रे सत्त्वादव्याप्तिवारणाय शब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादौ सत्त्वादुद्भूतेति । शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्त्यतो विशेषेति । कालादिवारणाय विशेष्यत्वम । इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय,

खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।

संयोगाश्रयमाहुः । तानि ज्ञानेन्द्रियकर्मेन्द्रियभेदात् द्विधा । तत्र वागादीनि पञ्च कर्मेन्द्रियाणि । श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि ।

नैयायिकास्तु कर्मेन्द्रियाण्यनङ्गीकुर्वन्तः श्रोत्रादीनां पञ्चानां भौतिकत्वमाहुः । तन्न, साक्षात्सृष्टौ भगवत एवेन्द्रियोत्पत्तिश्रुतेः 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति क्रमसृष्टौ चाहङ्कारिकत्वश्रुतेः, मूढभूतांशत्वेन ज्ञानकरणत्वानुपपत्तेश्च । 'आदित्यं वै चक्षुर्गच्छति' इत्यादिना देवतासु तल्लयश्रवणाच्च । अन्यथा देवतामनादृत्य परमाणुभाव एवोच्येत ।

केचित्तु—इन्द्रियाणि नित्यान्याहुः, तदप्येतेनैवापास्तम् ।

अन्ये तु—गोलकानां दृश्यत्वादिन्द्रियाणामैन्द्रियकत्वमाहुः ।

तदप्यसङ्गतम् । छिन्नकर्णस्य शब्दश्रवणानुपपत्तेः । नष्टलिङ्गचक्षुषश्चाचाक्षुषापत्तेश्च । अतो रूपाद्युपलब्धिः करणसाध्याक्रियात्वात्, छिदिक्रियादिवत्; इत्यनेनेन्द्रियाणां करणत्वेन रूपेण सिद्धौ गोलकं न करणमुक्तरीत्यान्वयव्यतिरेकव्यभिचारादित्येवं गोलकातिरिक्तेन्द्रियसिद्धौ तस्यातीन्द्रियत्वमवसीयते ।

अपरे तु—एकमेवेन्द्रियं व्यापिकायास्त्वच एव तत्तदवच्छेदेन तत्तज्ज्ञानजनकत्वात्कृतमिन्द्रियान्तरेणेत्याहुः ।

तदपि न, उपाधिभेदशक्तिभेदयोः कल्पनापत्तेः सर्वेन्द्रियाणि च' इति श्रौतबहुवचनबाधापत्तेश्च ।

---

मनःसंयोगस्यापि ज्ञानकारणतया तद्दोषतादवस्थ्यं, समवायेन कारणत्वविलक्षणे तु क्वापि कार्ये कालमनःसंयोगस्य समवायेनाकारणत्वाज्ज्ञानपदमनर्थकं, तथापि समवायेन कारणतालाभायैव ज्ञानपदम् । अथवा दैशिकपरत्वादिकारणदिङ्मनःसंयोगमादाय दिश्यतिव्याप्तिवारणाय तत्पदमिति भावः । "अङ्गोपाङ्गकर्मनिर्माणनामकर्मोदयात्प्राप्यानि त्वगादीन्द्रियाणि" इति जैनाः ।

नच क्रमसृष्टावेकस्मात्तैजसात्कथं नानाविधेन्द्रियोत्पत्तिः सम्भवतीति वाच्यम्, भगवदिच्छासहकृतात्तस्मात्तदनुसारेण गुणपरिणामभेदे देहस्यावस्थानभेदेनेव तस्यापि भिन्नावस्थात्वेन नानाविधोत्पत्तिसम्भवात्, अतो न किञ्चिदनुपपन्नम्।

तानि चैकादशाणूनि च, तदुपपादितमविरोधचतुर्थपादभाष्ये, नित्यानि चेत्यपि।

**मायावादिनस्तु**—अनित्यत्वं, मध्यमपरिमाणत्वं, भौतिकत्वं चाहुः। तदपि तत्रैव निरस्तम्।

देवताधिष्ठितत्वादेव च स्वकार्यक्षमत्वमतो न त्वचो व्यापकत्वकल्पनमपि युक्तम्। चक्षुषो गमनादेरपि तत एवोपपत्तेरित्यपि तत्रैव।

तत्र व्यवहारजनकमिन्द्रियं वह्निदेवताकमिन्द्रियं वा वाक्, शिल्पजनकमिन्द्रियमिन्द्रदेवताकमिन्द्रियं वा दोः, आनन्दजनकमिन्द्रियं प्रजापतिदेवताक-

---

प्रथमलक्षणेऽसङ्गतिं निवारयन्ति—**नचेत्यादिना**। **उपपादितमिति**। तथा प्राणः इत्यारभ्येति शेषः। मायावादिमतं खण्डयन्ति—**मायावादिनस्त्वित्यादिना**। **तत्रैव**। अविरोधतुरीयपादे। **देवतेति**। शरीरव्यापिका त्वगिति कल्पनमयुक्तमित्यर्थः। कर्मेन्द्रियाणां लक्षणानि प्रदर्शयन्ति—**व्यवहारेत्यारभ्य तथेत्यन्तम्**। "विवक्षोर्मुखतो भूम्नो वह्निर्वाऽव्याहृतं तयोः", "तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम्।", "वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यते", "वह्निर्वाचां मुखं भेजे" इत्यादितुरीयप्रस्थानवाक्येभ्यः "मुखादिन्द्रश्चाग्निश्च" इति श्रुतेश्च वागिन्द्रियं वह्निदेवताकम्, तत्कार्यं च वाग्व्यापारो वाणीत्यतो व्यवहारजनकत्वं तस्य। उक्तं च—"वाच्यार्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः" इति। **शिल्पजनकेति**। "हस्तौ चादातव्यं च" इति श्रुतेः। ग्रहणकर्मकमिन्द्रियं शिल्पजनकं वादोः। तदधिष्ठातृदेवता चेन्द्रः। "हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया। तयोस्तु बलवानिन्द्र आदानमुभयाश्रयम्" इति वाक्यात्। "बाहवो लोकपालानां" इत्यत्रापि च सुबोधिन्यां लोकान्यान्तीति व्युत्पत्तिमाश्रित्य "पालनकर्तारो देवा इन्द्रादयः" इत्युक्तम्। द्वितीयस्य पञ्चमेऽपि "वह्नीन्द्रोपेन्द्रमित्रकाः" "वाग्दोर्मेढ्राङ्घ्रिपायवः" इतीन्द्रियाणां क्रमशो देवा उक्ताः। तृतीये च "हस्तावस्य विनिर्भिन्नाविन्द्रः स्वर्पतिराविशत्। वार्तयांशेन पुरुषो यदा वृत्तिं प्रपद्यते" इत्यत्रेन्द्रदेवताकत्वं वार्ताशब्देन करणसामर्थ्यं शिल्पजनकत्वं प्रतिपादि-

मिन्द्रियं वा मेढ्रम्, गतिजनकमिन्द्रियं विष्णुदेवताकमिन्द्रियं वाङ्घ्रिः, विसर्गजनकमिन्द्रियं मित्रदेवताकमिन्द्रियं वा पायुः, गोलकान्येषां प्रसिद्धानि। एतावान्परं विशेषः, दोरादिचतुष्कमन्यदेवतावच्छेदेनापि कार्यं जनयति। अन्यथा मल्लविद्याकुशलानां खञ्जानां च हस्ताभ्यां चलनं, विषयेन्द्रियसंयोगाच्चक्षुरादिष्वानन्दः, पद्भ्यां तालादिवादनं, नेत्राभ्यामश्रुः, शरीरे च स्वेदरोमहर्षादयो न स्युः। वागिन्द्रियं तु न तथेति। इति पञ्चकर्मेन्द्रियाणि।

अथ ज्ञानेन्द्रियाणि। तत्र नभोगुणविशेषत्वेन शब्दग्राहकमिन्द्रियं दिग्देवताकं वा श्रोत्रम्। वायुगुणविशेषत्वेन स्पर्शग्राहकमिन्द्रियं वायुदेवताकं वा त्वक्। एवमग्रेऽपि पार्थिवेषु गन्धस्य सामान्यत्वाद्गन्धलक्षणेऽपि न विशेषपदवैयर्थ्यम्, गन्धग्राहकमिन्द्रियमश्विदेवताकं वा घ्राणम्। रूपग्राहकमिन्द्रियं सूर्यदेवताकं वा चक्षुः। रसग्राहकमिन्द्रियं वरुणदेवताकं वा रसनम्। गोल-

---

वानन्दं प्रतिपद्यते" "उपस्थश्चानन्दयितव्यं च" "सर्वेषामानन्दानामुपस्थ एकायनम्" इति भागवतश्रुतिवाक्यैरितिभावः। **गतीति**। "पादौ च गन्तव्यं च" इतिश्रुतेः। "विक्रमो भूर्भुवःस्वश्च क्षेमस्य शरणस्य च। सर्वकामवरस्यापि हरेश्चरण आस्पदम्" "गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम्। पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः" "पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत्। गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते" इति भागवतवाक्येभ्यश्च। **विसर्गेति**। "पायुश्च विसर्जयितव्यं च" इति श्रुतेः। "पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद। हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदः स्मृतः", "उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम्। ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः", "गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत्। पायुनांशेन येनासौ विसर्गं प्रतिपद्यते" इत्यादिभागवतवाक्येभ्यश्च। अपाङ्गानामिन्द्रियान्तरेण कार्यसाधकत्वं प्रदर्शयन्ति–**विशेष** इत्यादिना। अत्रैव "इन्द्रादयो बाहव आहुरुस्राः" इत्यादिवाक्यान्यपि द्वितीयस्कन्धोक्तान्यपि अनुसन्धेयानि।

अथ ज्ञानेन्द्रियाणां लक्षणानि सङ्गृह्यन्ते। **तत्रेति**। "कर्णौ श्रोत्रं ततो दिशः", "कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः", "दिशः श्रोत्रममुष्य शब्दः कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः" इति भागवतवाक्येभ्यः। **वाय्विति**। "त्वगस्य स्पर्शवायोश्च सर्वमेवास्य चैव हि तत्र चान्तर्बहिर्वायुस्त्वचाऽऽरब्धगुणावृतः" इत्युक्तेः। **गन्धेति**। "नासत्यदस्रौ परमस्य नासे घ्राणञ्च गन्धः", "अश्विनोरोषधीनां च घ्राणे मोदप्रमोदयोः", "नासिके निर-

**कान्येषां प्रसिद्धानि । एतावान्विशेषः । त्वक्चक्षुषी द्रव्यस्यापि ग्राहके नान्यानीति नैयायिकादयः । अस्माकं तु न तथा, इत्युपपादितम्प्रत्यक्षविचारे । एतानि दशापि राजसाभ्यां बुद्धिप्राणाभ्यां परिगृहीतत्वादपि राजसानि, न तु ज्ञानजनकानि । सात्त्विकानि क्रियाजनकानि । जडपर्यवसानात्तामसानि । तदुक्तम्–"तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च" । "ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसौ" इति । एतेन सात्त्विकमेकादशकः प्रवर्तते । वैकृतादहङ्कारात्, इति साङ्ख्यकारिकोक्तमत्र नाभिप्रेतमिति ज्ञापितम् । एतेषु**

---

"मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायत । ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते" इति भागवतोक्तिभ्यः । **तदुक्तमिति** । अत्रेदं तत्त्वम्–इन्द्रियाणि, इन्द्र आत्मा ईयते अनेनेतीन्द्रियम् । आत्मा हि न चाक्षुषः । नाप्यन्येन्द्रियग्राह्यः । व्यवह्रियते च देवदत्तस्त्वं यज्ञदत्तस्त्वमिति । स च पश्यति शृणोतीत्येव प्रतीयते । तानीन्द्रियाणि दश । तैजसादित्युक्त्या ज्ञानेन्द्रियाणि ज्ञानप्रधानानि सात्त्विकानि, कर्मेन्द्रियाणि च जडपर्यवसानात्तामसानीति मतस्य निरासः । तत्र प्रमाणं "ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसौ" । बुद्धिः प्राणश्च राजसाहङ्कारकार्यौ । अत्र हि–"ज्ञानशक्तिः क्रियाशक्ति"रित्युक्तम्, तेन बुद्धेः सात्त्विकम् । प्राणश्च वायुरूपः श्वासोच्छ्वासाभ्यां प्रतीयते, इति तयोर्न राजसाहङ्कारोद्भवत्वमिति मतमपि निरस्तम् । अस्मिन् मते न बुद्धिर्ज्ञानम्, किन्तु ज्ञानशक्तिः । ज्ञानजनिका शक्तिः । "सुबुद्धिरयं पदार्थान् जानाति" इति ज्ञानकरणत्वेन बुद्धिर्व्यपदिश्यते । कार्यकारणयोरभेदोपचाराच्च बुद्धिज्ञानयोः पर्यायत्वव्यवहारः । प्राणोऽपि वायुभिन्नः "अथ हैनमासन्यं प्राणमूचुः" इति प्राणरूपां विलक्षणां देवतामाह श्रुतिः । अतो ज्ञानजनने शक्तिर्यस्य, क्रियाजनने शक्तिर्यस्येति च तयोर्भिन्नधर्मत्वात्तावुभौ राजसाहङ्कारकार्यौ ।

**सात्त्विकेति** । साङ्ख्यसप्तत्यामीश्वरकृष्णाः "सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् । भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" इत्याहुः । तदर्थस्तु–प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विको वैकृतात्सात्त्विकादहङ्कारात्प्रवर्तते । भूतादेस्त्वहङ्कारात्तामसात्तन्मात्रो गणः प्रवर्तते । कस्मात् ? यतः स तामसः । एतदुक्तं भवति, यद्यप्येकोऽहङ्कारस्तथापि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्यं करोतीति । ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्यं जन्यते तदा कृतमकिञ्चित्करेण रजसेत्यत आह–तैजसादुभयमिति । तैजसाद्राजसादुभयं गणद्वयं भवति । यद्यपि रजसो न कार्यान्तरमस्ति, तथापि सत्त्वतमसी स्वयमक्रिये समर्थेऽपि

चक्षुःश्रोत्रघ्राणहस्तपादा द्विगोलकाः, जिह्वाख्यं तु गोलकं वाग्रसनाभ्यामधिष्ठितम्, पायूपस्थौ एकैकगोलकौ, त्वग्व्यापिकेति। एतेषां देवाः पूर्वमुक्ताः। तेषां कार्यं विषयाभिव्यक्तिः। तदुक्तमाचार्यैः, तृतीयस्कन्धे-'अर्थाभिव्यञ्जनं यतः' इत्यस्य व्याख्याने 'देवताधिष्ठानव्यतिरेकेण केवलादिन्द्रियाच्छब्दज्ञानादिकं न भवतीति, सामर्थ्यं देवानामेव। इन्द्रियाणामेव सामर्थ्यं कल्पेत यदि कल्पितं शास्त्रं स्यात्, यथासिद्धमत्रोच्यत इति देवाधीनैव विषयप्रकाशनशक्तिः' इति। ज्ञानेन्द्रियाणि तु च, वस्तुप्राप्यप्रकाशकारीणि।

सौगतास्तु—श्रोत्रस्याप्राप्यप्रकाशकारित्वमाहुः। तदन्ये दूषयन्ति—यथाह शास्त्रदीपिकाकारः, अप्राप्यकारित्वे हि सन्निकृष्टविप्रकृष्टस्थितौ युगपच्छब्दमुपलभेयाताम्, तयोस्तु क्रमेणोपलब्धिर्न कथञ्चिदप्य प्राप्यकारित्वे समर्थयितुं शक्या। किञ्च शब्दः क्षणिको वा स्थायी वा। यदि क्षणिकः, प्रत्यासन्नैर्गृहीतमात्रो नष्टः कथं विप्रकृष्टैर्गृह्येत। स्थायित्वं तु सौगतानामनभिमतमेव। स्थायित्वे प्रत्यासन्नानां चिरकालं श्रवणमनुवर्तेतेति। तस्मान्नाप्राप्य-

---

एतेषां गोलकान्याहुः—**चक्षुरि**त्यादिना। **अर्थे**ति। "वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा। अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत्। वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः" इति तृतीयस्य पञ्चमे वाक्यम्। **देवे**ति। वागादीन्द्रियाधिष्ठातृदेवैरेव विषयप्रकाशः नाथद्वारीयमुद्रिते पुस्तके तु सामर्थ्यमित्यत्र तथात्वमिति पाठ आदृतः पुरुषोत्तमचतुर्वेदेन। **कल्पेते**ति। इन्द्रियाधिष्ठातृदेवताप्रतिपादकवाक्यानि कल्पितानि भवेयुरित्यर्थः। देवताव्यतिरेकेण यदि भवेच्छब्दादिज्ञानं तदा मृतशरीरेऽपि गोलकानां विद्यमानत्वात्तस्यापि ज्ञानं भवेदेव, तच्च न सम्भवत्यतो विषयप्रकाशनशक्तिर्देवानामेवेति ध्येयम्।

**सौगतास्त्वि**ति। "कर्मैके तत्र दर्शनात्" इति शब्दनित्यताधिकरणे शब्दप्रत्यक्षे बौद्धानामियं शङ्का। **अप्राप्यकारित्वे ही**ति। अप्राप्त एव शब्दः श्रोत्रेण गृह्यत इति पक्ष इति भावः। **सन्निकृष्टे**ति। दूरस्थस्य समीपस्थस्य च शब्दस्य युगपज्ज्ञानं स्यादिति भावः। श्रीमत्कुमारिलभट्टपादाः शाक्यान् प्रत्याहुः-"येषां त्वप्राप्त एवायं शब्दः श्रोत्रेण गृह्यते। तेषामप्राप्तितुल्यत्वं दूरव्यवहितादिषु। तत्र दूरसमीपस्थग्रहणाग्रहणे समे। स्यातां, नच क्रमो, नापि तीव्रमन्दादिसम्भवः" इति। दूषणान्तरमाहुः पार्थसारथिमिश्राः—**किञ्चे**ति।

कारित्वं श्रोत्रस्य सम्भवतीति । वृत्तेस्तु न व्यापारत्वम्, किन्तु ज्ञानावस्थात्वमेवेति व्युत्पादितं पूर्वम् । कर्मेन्द्रियेषु तु, तत्तत्क्रियैव व्यापारः, 'सर्वेषामानन्दानामुपस्थ एकायनम्' इत्यादिश्रुतेः । तज्जन्या स्थूलशरीरक्रिया च फलमिति सङ्क्षेप इति" श्रीमत्पुरुषोत्तमचरणा निरूपयाञ्चक्रुः ।

---

सिद्धा तत्प्रद्वेषेण लङ्घ्यते । नच शब्दार्थसम्बन्धः कर्तुं योग्यः कथञ्चन । क्षणिक श्रोत्रपक्षे च सोऽवश्यं कृतको भवेत् । संस्कारे तुल्यमेतच्चेन्न संस्कारान्तरस्थितेः । संस्कारशब्दवाच्या हि केचिद्वर्षशतान्यपि । ध्रियन्ते तेन तच्छब्दसम्बन्धो न विनश्यति" इति । निर्णयसागरे मुद्रितायां शास्त्रदीपिकायां तु दृश्यते पाठभेदः । तत्र हि—अप्राप्यकारित्वे हि सन्निकृष्टविप्रकृष्टस्थितौ **पूर्वे** शब्दविचारावसरे । कर्मेन्द्रियाणां व्यापारं प्रदर्शयन्तः प्रमाणमाहुः—**सर्वेषामिति** ।

आकाशप्रादुर्भावं निरूपयंति—**आकाशेति** । क्रमसृष्टौ तत्प्राथम्यमाहुः—**सहीति** । **सहीत्यतो**ऽनुसन्धेयम् । जन्माद्यधिकरणे आद्यस्य यतो जन्मेति पक्षमनुसृत्य प्रथमकार्यरूपत्वेन प्रतिपादितः । ननु "जन्माद्यस्य यतः" इत्यत्र आद्यस्य आकाशस्य जन्म यतो ब्रह्मणः सकाशादिति पक्षाभ्युपगमे तत्राकाशजनकत्वस्यैव लक्षणत्वमायाति न तु सर्वभूतजनकत्वस्य तत्स्थित्यादिकर्तृत्वस्य चेति नैतन्मञ्जुलम्, इति चेत्, न; तत्रैव श्रीमदाचार्यचरणैः "एकत्र सिद्धः शास्त्रार्थः प्रकारान्तरेऽपि 'यतो वा इमानि भूतानि' इत्यत्र विस्फुलिङ्गवत्सर्वोत्पत्तिः, अत्र तु क्रमेणेति विशेषः" इत्युक्तत्वात् । ननु "एतस्मादात्मन आकाशः सम्भूतः" इति श्रुतावाकाशाद्वाय्वादीनां जननमुक्तम्, इह पुनर्नारायणादेवेत्यनया श्रुत्या प्रथमकार्यरूपत्वस्य समर्थनं तु सुतरां विरुद्धमिति चेत्, "नारायणात्प्राणो जायते" इत्यारभ्येह साक्षादेव नारायणात्पदार्थजातानां सृष्टिमाह भगवान् वेदो विस्फुलिङ्गश्रुतिवत् । नेयं क्रमसृष्टिर्येन त्वदुक्तशङ्कावकाशः स्यात् । प्राथम्यं तु क्रमसृष्टौ । तदेवाह श्रीमद्भागवते द्वितीयस्कन्धे भगवानात्मभूः "तामसादपि भूतादेर्विकुर्वाणादभून्नभः" इत्यहङ्काराद्भूतोत्पत्तौ तत्प्राथम्यम् । तत्र हि "नभः" इति नाम "अत्यन्ततामसत्त्वात्प्रकाशवृत्तिरहितत्वान्न विद्यते भा यस्येति" इति श्रीमदाचार्यचरणोक्त्या प्रकाशदेश्च तत्प्राथम्यं स्पष्टमेव । नानात्वमिच्छतां भगवतः सृष्टिप्रकारप्रतिपादकवाक्येष्वपि "अन्तःशरीर आकाशात्पुरुषस्य विचेष्टितः" इत्युक्त्या भगवच्छरीरमध्यगत आकाश एव तच्चेष्टोक्ता, यतश्चेष्टारम्भ एवाकाशात्प्राग्भवितुं नार्हतीति तत्प्राथम्यं तु सुतरां सिद्धमेव । ननु छान्दोग्ये "तत्तेजोऽसृजत" इतिश्रूयते श्रुतिः, सापि क्रमसृष्टि-

---

इत्यादिनैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय द्वितीये खण्डे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म" इत्यारभ्य ब्रह्मणोऽद्वितीयत्वं प्रतिपाद्य तदिच्छया सृष्टिमाह श्रुतिः "तदैक्षत बहु स्यां प्रजायेय तत्तेजोऽसृजत" इत्यादि। अत्र तेजोऽबन्नादिसृष्टिरुक्ता, न, तु तत्त्वान्तराणि। उपक्रमे च सर्वविज्ञानम्प्रतिज्ञातं, तत्राकाशनिरूपणाभावे प्रतिज्ञाहानिः, "एकमेवाद्वितीयं ब्रह्म" इत्युक्त्या चाकाशस्य पृथङ्निर्देशे द्वैतापत्तिः; आकाशास्तित्वं तु श्रुत्यन्तरे प्रसिद्धमेव, तेजोऽबन्नानां स्थितिरप्याकाशमन्तरा नार्हति; तस्मात् "श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात्" इति पूर्वतन्त्रन्यायेन सर्जनशेषस्याकाशस्यातिदेशश्छान्दोग्योक्तक्रमसृष्टौ कर्तव्यः। नात्र छान्दोग्यश्रुतौ क्रमस्य वाचकः कश्चिच्छब्दः श्रूयते। तस्मात् तैत्तिरीयाद्युक्तसृष्टिवाक्यानां नैव सम्भवति मिथो विरोधः। "खं वायुः" इत्यादीनां विस्फुलिङ्गसाध्याश्रुतीनां साक्षान्निरुपाधिकब्रह्मणः सकाशादुत्पत्तावभिप्रायः। नच कल्पभेदेन सृष्टिभेदोऽप्यशास्त्रीय इति वाच्यम् प्रतितन्त्रं श्रूयमाणत्वात्। पयोदधिदृष्टान्तश्च न तत्त्वानां सृष्टौ प्रमाणम्, तयोः पृथक्तत्त्वाभावात्। कल्पान्तरीयसृष्टौ प्रमाणं तु निबन्धीयशास्त्रार्थप्रकरणेऽस्ति। इहापि तदेवोह्यम्। यत्तु निबन्धे सृष्टिप्रकारा एव प्रदर्शिताः श्रीमदाचार्यचरणैर्न तु कल्पभेदाः इत्याहुः; तन्न, "एवं कदाचिद्भगवान् साक्षात्सर्वं करोत्यजः। कदाचित्पुरुषद्वारा कदाचित्पुनरन्यथा। कदाचित्सर्वमात्मैव भवतीह जनार्दनः। महेन्द्रजालवत्सर्वं कदाचिन्माययाऽसृजत्। तदा ज्ञानादयः सर्वे वार्तामात्रं न वस्तुतः। वियदादि जगत्स्रष्टा तदाविश्य द्विरूपतः। जीवान्तर्यामिभेदेन क्रीडतिस्म हरिः क्वचित्" इत्यत्र कालवाचककदाचिच्छब्दाभ्यासेन तदुक्तेः। नचेदमश्रौतमिति शङ्क्यम्। मुण्डके "दिव्यो ह्यमूर्तः पुरुषः" इत्युपक्रम्य "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति साक्षात्सृष्टिः। ऐतरेये "आत्मा वा इदमेक एवाग्र आसीत्" इत्युपक्रम्य लोकानां लोकपालानां च सृष्टिः। महोपनिषदि "एको ह वै नारायण आसीन्न ब्रह्मा" इत्यारभ्य चतुर्दशपुरुषादीनां सृष्टिः। छान्दोग्ये "सदेव सौम्येदमग्र आसीत्" इत्युपक्रम्य तेजोबन्नादिसृष्टिः। तैत्तिरीये "आत्मन आकाशः सम्भूतः" इत्यादिनाऽऽकाशक्रमेण सृष्टिः। पुराणादौ "कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः। पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्। ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात्। विज्ञानात्माऽऽत्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः" इत्यत्र श्रीमद्भागवततृतीयस्कन्धे सृष्टिरुक्ता। पञ्चरात्रे वासुदेवो भगवान् सर्वकारणं परमेश्वरस्तस्मादुत्पद्यते सङ्कर्षणाख्यो जीवस्तस्मात्प्रद्युम्नो मनस्तस्मादनिरुद्धोऽहङ्कार इत्येवम्प्रकारेण सृष्टिरुक्ता। तत्त्वार्थदीपनिबन्धीयसर्वनिर्णयप्रकरणेऽपि "शतं कल्पास्ततोऽप्यन्ये सन्ति कृष्णेन निर्मिताः। सत्त्वेन

अथ एवं प्राणादित्रयस्य नारायणाप्रादुर्भावं निरूप्य आकाशादिपञ्चमहाभूतानां प्रादुर्भावमाह—**खमिति** अत्रापि भूतसामान्यलक्षणं तु श्रीमत्पुरुषोत्तमचरणाः प्रस्थानरत्नाकरे एवमाहुः—"अथ भूतानां लक्षणान्युच्यन्ते—तत्राकाशादिपञ्चकान्यतमत्वं सविशेषशब्दादिमत्त्वं वा सामान्यलक्षणम् । बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वमिति भूतलक्षणं त्वग्रे आलङ्कारिकैर्दूषणात्, योग्यताघटितत्वेऽपि प्रमाणरहितत्वान्नाद्दतम् । एवमन्यदपि बोध्यम्" इत्याहुः ।

तत्र आकाशो अत्र प्रस्थानरत्नाकरे पण्डितपुरन्दराः—रूपरहितः । स्वशक्त्या चक्षुषाऽग्राह्यः । आकाशसामर्थ्याद्ग्राह्यः । स हि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः", "खं वायुर्ज्योतिः" इति तैत्तिरीयमुण्डकश्रुतिभ्यां ब्रह्मणः प्रथमकार्यरूपः ।

तत्र आकाशस्य भूतावकाशदातृत्वम्, बहिरन्तरव्यवहारविषयत्वम्, प्राणेन्द्रियान्तःकरणाधारत्वं चेति लक्षणत्रयम् । तदुक्तम् भूतानां छिद्रदातृत्वं

---

एनमपि पण्डितप्रकाण्डानां श्रीमत्पुरुषोत्तमानां सम्मत्या समर्थयन्ति—**अत्रापीति** । तत्र तावत्तन्मात्राणां विकारपरिसमाप्तौ भूतानां लक्षणान्युक्तानि । अत्रापि मूले "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इतिश्रुतौ पञ्चानामपि भूतानां नारायणादुत्पत्तिः प्रतिपादिता, अतः प्रथमं प्रस्थानरत्नाकरोक्तं भूतसामान्यलक्षणमुच्यते—**आकाशादीत्यनेन** । कणभक्षतनयास्तु—भूतत्वेन्द्रियप्रकृतित्वम् । बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वं वा । तच्च संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वमेव । इन्द्रियप्रकृतित्वमिन्द्रियोपादानत्वम् । तद्धि नभसोऽवच्छिन्नानवच्छिन्नभेदकल्पनयोपपादनीयमिति किरणावली । बाह्यैकैकेन्द्रियेण चक्षुरादिना ग्राह्या ये विशेषगुणा रूपादयस्तद्वत्ता पृथिव्यादीनामित्यर्थः । अन्तःकरणग्राह्यत्वस्यैतेषु सत्त्वादेकैकेत्यसिद्धमतो बाह्येति कन्दली । आकाशं लक्षयन्ति—**तत्राकाशे** । एतल्लक्षणत्रयमाधिदैविकादिभेदेन बोध्यम् । तत्र प्रमाणमाहुः—**भूतानामिति** । भूतानां प्राणिनां छिद्रदातृत्वम्, बहिरन्तःस्वरूपत्वम्, प्राणेन्द्रियान्तःकरणाधारत्वं चेति नभसो लक्षणत्रयम् । छिद्रमवकाशः, बहिरन्तर्व्यवहार आकाशविषय एव । पृथिव्यादेरावणरूपस्य न बहिरन्तर्व्यवहारविषयत्वं, परिच्छेदकत्वं परम् । परिच्छेदकत्वं नाम भागद्वयविभाजकत्वात् । प्रदेशो न व्यवहारहेतुस्तुल्यत्वादिति नातिव्याप्तिः । आन्तरो देशो

बहिरन्तरमेव च । प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम्' इति । तत्र आद्यमाधिदैविकस्य स्वाधिभौतिकस्वरूपकर्मकदातृत्वस्य तत्रैव सत्त्वात् । द्वितीयं तु आधिभौतिकं स्वरूपलक्षणम्, व्यवहारोपयोगि । नचावरणेऽतिव्याप्तिः । तस्य विषयपरिच्छेदकत्वात् । अत एव न भूप्रदेशे दिशि च । आन्तरो देशो बाह्यो देशः । आन्तरा दिक् बाह्या दिगिति तत्र विद्यमानत्वेनाभिलप्यमानत्वात्, अतो धूमोऽन्तरेव न बहिरिति व्यवहारसाक्षिको विवर एव बहिरन्तर व्यवहार इति । एतेन आकाशमनिच्छन्तो म्लेच्छा भाट्टैकदेशिनश्च परास्ताः ।

अयं नित्य इति वैशेषिकादयः । तथाहि—समवाय्यादिकारणत्रयसामग्र्या हि सर्वोत्पत्तिः । तत्राकाशावयवाप्रसिद्ध्या समवाय्यभावेन तद्द्वयसंयोगरूपा-समवायिनोऽप्यभावात् । केवलनिमित्तेन कार्योत्पत्त्यदर्शनात् । सृष्टिप्रागभाव-दशायामसुषिरत्वस्यासम्भाव्यत्वात् । पृथिव्यादिवैधर्म्याद्विभुत्वात्सम्भवश्रुते-रुपाधिपरत्वेन, गौणत्वेन, अजत्वसिद्धिः । अतोऽयं नित्य इति वदन्ति ।

---

स्थानम् । धिष्ण्यशब्देन वैदिकत्वं तस्य स्थानस्य द्योतितम् । **नभसो वृत्तिलक्षणमिति** । नभो हि त्रिधा वर्तते । स्वस्याधिभौतिकं रूपं स्वयं प्रयच्छतीत्याधिदैविकत्वम् । अन्तर्बहि-र्व्यवहाराश्रयमित्याध्यात्मिकत्वम् । देहान्तःस्थितपदार्थाश्रयत्वेनाधिभौतिकत्वमिति तदर्थः । तदेवाहुः—तत्रेत्यारभ्याऽ**पास्ता** इत्यन्तम् ।

तस्य नित्यत्वे कणभक्षमतमाहुः **अयमित्यनेन** । **कारणत्रयेति** । समवाय्यसमवायि-निमित्तभेदादित्यर्थः । तत्र यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्, कार्येण कारणेन वैकस्मिन्नर्थे समवेतं सत्कारणमसमवायिकारणम्, एतदुभयभिन्नं निमित्तकारणम् । एतत्का-रणत्रितयसामग्र्या कार्यजातमुत्पद्यते । आकाशावयवाभावान्न तस्य समवाय्यसमवायिकारणे सम्भवतः । तयोरभावे न कस्यचिदपि निमित्तत्वकल्पनाऽपि स्यात् । कार्यत्वं च प्रागभाव-प्रतियोगित्वम् । तदेव न सम्भवति । आकाशप्रागभावे मानाभावात् । "तस्माद्वा एतस्मा-दात्मन आकाशः सम्भूत" इतिश्रुतेर्जन्यत्वशङ्कायामाहुः—**पृथिव्यादीति** । एककारण-जन्यानां साधर्म्यं तद्विरुद्धानां वैधर्म्यमिति नियमात् । पृथिव्यादीनामाकाशस्य वैधर्म्यं सुप्रसिद्धमेव । तेन नैककारणजन्यत्वं पृथ्व्याकाशयोः । नच सम्भवश्रुतावुत्तरोत्तरं प्रति पूर्वं

**तद्वियदधिकरणे दूषितं व्यासैस्तद्दिङ्मात्रं प्रदर्श्यते, तथाहि—नभो जन्यं विकारित्वात्, विकारिलौकिकव्यवहारविषयत्वात्, घटादिवत्; इत्यनुमानेन 'आत्मन आकाशः सम्भूतः' इति श्रुत्यनुगृहीतेन जन्यत्वसिद्धा, ईश्वरस्यैव समवायिनो निमित्ताद्विभागाच्च समवायिनः सुखेन जन्यत्वसिद्धिः। क्रमसृष्ट्यन्तरेऽपि तत्सिद्धिरप्रत्यूहातः सुष्ठु।**

---

एवं कणभक्षमतमुपन्यस्य खण्डयन्ति—**तद्वियदधिकरण** इत्यादिना। अविरोधस्य तार्तीयप्रथमन्यायेन दूषितं व्यासपादैरित्यर्थः। तत्र च "यावद्विकारं तु विभागो लोकवत्" इतिसूत्रेणाकाशोत्पत्तावसम्भवापत्तिर्निवारिता। आकाश उत्पादविनाशशाली, विकृतत्वात्; विकृतो लौकिकव्यवहारविषयत्वात् लोकवत्; यन्नैवं तन्नैवं इत्यनुमानेन तत्सिद्धेः। ननु ब्रह्मणः प्रज्ञानघनत्वाद्व्यापकत्वेन विभागासम्भवाच्च तज्जन्यत्वविरोध इति चेन्न; ब्रह्म यदा सिसृक्षति तदा घनत्वं तिरोभावयतीत्याकाशो विभज्य इति नानुपपत्तिः काचित्। नन्वात्माऽपि आकाशादिभ्यो विभक्त इति सोऽपि कार्यरूप एव स्याद्घटादिवत्, इति चेत्, न; "आत्मन आकाशः सम्भूतः" इतिश्रुतेः। यद्यात्मापि विकारः स्यात्तस्मात्परं हि न किञ्चिच्छ्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः कार्यत्वे स्यात्तदा शून्यवादः प्रसज्जेत। आत्मत्वाच्चात्मनो निराकरणशङ्कानुपपत्तिः। नह्यात्मोपादानान्तरस्योपादेयः, तस्य स्वयं सिद्धत्वात्। एवं चाकाशस्य जन्यत्वान्न सम्भवश्रुतिर्गौणी स्यादिति ध्येयम्। तथाहि—ब्रह्मणो विरुद्धधर्माश्रयत्वात्सर्वोपादानत्वाच्च न सम्भवश्रुतेर्गौणत्वम्। ननु श्रुतिर्हि "आकाशवत्सर्वगतश्च नित्यः" "आकाशशरीरं ब्रह्म" "स यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः, "आकाश आत्मा" इत्यादिभ्यो नित्यत्वमाहेति चेत्, न; आकाशवदिति श्रुतौ ब्रह्मोपमानता, सा च, समोऽनेन सर्वेणेत्यत्र यथा सर्वस्य भगवदुपमानता भगवतस्तत्परिमाणतायां पर्यवस्यति, न तु सर्वस्य ब्रह्मतुल्यपरिमाणत्वे; तथात्राप्युपमानता ब्रह्मणो व्यापकत्वनित्यत्वयोः पर्यवस्यति नत्वाकाशस्य भगवत्तुल्यत्वे। सर्वगतनित्यशब्दयोर्ब्रह्मविशेषणत्वात्। "न तत्समश्चाभ्यधिकश्च दृश्यते" इति साम्यनिषेधश्रुतेः "ज्यायानाकाशात्" इति ज्यायस्त्वश्रुतेश्च। तथा सत्याकाशस्य यन्नित्यविभुत्वं तदन्यापेक्षयैव;. न तु ब्रह्मवदिति फलितम्। एवमाकाशशरीरत्वश्रुतिः "य आकाशे तिष्ठन्" इत्यन्तर्यामिब्राह्मणेन, बहुव्रीहिणा तस्यैवार्थस्य लाभात्। एवं सति यथा पृथिव्यादीनामाधारतामात्रं न तु नित्यत्वादिकमपि, तथैवाकाशस्यापीति बोध्यम्। एवमनन्तत्वोपमानश्रुतावपि आपेक्षिकमेवानन्तत्वमाकाशस्येति पूर्ववत्साम्यश्रुत्यैवैकवाक्यतां लभते।

अथ प्रसङ्गादिदं विचार्यते–आकाशे नीलप्रतीतिर्या सा भ्रमः प्रमा वेति।

तत्र बहवः, आकाशस्य रूपवत्त्वे न मानम्। तथाहि–न तावत्प्रत्यक्षम्; आकाशं तद्रूपं वा पश्यामीत्यप्रत्ययात्। नीलं नभोऽस्तीति प्रतीतिः सार्वलौकिकीति चेत्, तस्या भ्रान्तत्वात्। ननु रूपवतः प्रत्यक्षविषयता न नियता परमाणौ व्यभिचारात्, इति चेत्, न; सहकार्यभावस्य तत्र तन्त्रत्वात्। किं तत्सहकारीति चेत्, महत्त्वमेव। नापि वायुभिन्नत्वे सति महत्त्वात्पृथिवीवदित्यनेनाकाशे रूपसिद्धिः, द्रवत्वस्य तत्रोपाधित्वात्। नापि क्रियादिरहितत्वे सति भूतत्वात्, यन्नैवं तन्नैवं कालादिवदित्यनेन सिद्धिः, द्रव्यारम्भकत्वस्योपाधित्वात्। आद्यक्षणीयघटादौ व्यभिचाराच्च। बहिरिन्द्रियग्राह्यविशेषगुणवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्मवत्त्वस्य कालादीतरद्रव्यत्वस्य वा भूतत्वस्य तत्रापि

---

त्वादौ तात्पर्यमपि तु ब्रह्मात्मकत्वे। वस्तुतस्तु प्राणसञ्चारायाकाशस्यात्मत्वमुच्यते। तत्रायमर्थ एव न भवतीति न चाशङ्का न चोत्तरमिति। ननु भवन्मते प्रपञ्चस्य नित्यत्वात्कथमाकाश एवानित्यः ? इति चेन्न; आविर्भावतिरोभाववादे श्रीपुरुषोत्तमपादैः सम्यक् तस्य प्रपञ्चनात्। अत्रापि प्रपञ्चवन्नित्यत्वविरोधो न, किन्तु अजत्वविरोध एवेति सर्वं चतुरस्रम्।

आकाशनीरूपत्वं साधयन्ति—**अथे**त्यादिना। **प्रसङ्गा**दिति। स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः। **भ्रम** इति। तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारशालिज्ञानत्वं भ्रमत्वमितियावत्। **प्रमे**ति। तद्वति तत्प्रकारकं ज्ञानम्।

मतान्तराण्याहुः—**तत्रे**त्यनेन। प्रत्यक्षस्येन्द्रियार्थसन्निकर्षजन्यत्वादित्यर्थः। तथाहि–चाक्षुषत्वप्रयोजकस्य महत्त्वे सत्युद्भूतरूपवत्त्वस्याकाशेऽसम्भवेन चक्षुषः प्रमाजनकत्वासम्भवात्। ननु यद्याकाशो न चाक्षुषस्तदेह पक्षीति चाक्षुषाधिकरणत्वेन किं भासत इति चेदालोक एवेत्याकलय। **नीलं नभ** इति। यत्तु सुदूरं गच्छच्चक्षुः परावर्तमानं स्वचक्षुः कनीनिकामाकलयत्तथाभिमानं जनयतीति, तन्न, पिङ्गलसारनयनानामपि तथाभिमानात्। कथं तर्हि नीलं नभ इति प्रतीतिरिति चेत् ? सुमेरोर्दक्षिणदिशमाक्रम्य स्थितस्येन्द्रनीलमयशिखरस्य प्रभामालोकयतां तथाभिमानात्। ननु दधिधवलमाकाशमिति कथं प्रतीतिरिति चेत् ? मिहिरमहसां विशदरूपाणामुपलम्भात्तथाभिमानात्। प्रत्यक्षेण रूपाभावं

सत्त्वात्। किञ्च, आकाशो यदि रूपवान् स्यात् परममहान्न स्यात्, बहिरिन्द्रियग्राह्यो वा स्यात्, स्पर्शवान्वा स्यात्, पृथिव्यादित्रयं वा स्यादिति बाधकतर्कपराहतमाकाशस्य रूपवत्त्वमित्याहुः।

तत्र साहित्यसर्वस्वकारः—नेदमुचितम्, नीलं नभः पश्यामीति निःशङ्कं सार्वजनीनप्रत्ययात्। न चासौ भ्रमः, तत्कारणीभूतदोषस्य विकल्पपराहतेः। तथाहि—किमसौ विषयदोषः सादृश्यनिबन्धन इदं रजतमितिवत्? उत करणदोषः, पित्तादिनिबन्धनः शङ्खः पीत इतिवत्? नाद्यः, असम्भवात्; विषयगतदोषजन्यभ्रमत्वावच्छिन्नं प्रति धर्मिप्रमोषसहकृतारोपस्य तन्त्रत्वात्। प्रकृते तदभावात् नभस्त्वस्यावच्छेदकताया व्यवस्थापयिष्यमाणत्वात्। न द्वितीयः, अस्य प्रत्ययस्य सार्वजनीनत्वात्; युगपत्सर्वजनकरणदोषस्य वक्तुमशक्यत्वात्। न चैन्द्रजालिकमायायां यथा वस्तुग्रहणप्रतिबन्धरूपः करणगतो विषयगतो वा दोषः सार्वजनीनस्तथात्रेति वाच्यम्, तत्रैन्द्रजालिकस्य तत्परिपन्थिमन्त्रादिवतोऽन्यस्य च यथावस्तुग्रहणदर्शनेन तस्यासार्वजनीनत्वनिश्चयात्। किञ्च, सर्वेषां ख्यातिवादिनां मते आकाशस्यातीन्द्रियतायाः सम्मतत्वेन

---

निर्गुणं निष्क्रियं सम्भवति पश्चात्तत्समवेता गुणा उत्पद्यन्ते इति न्यायेनेति भावः। तत्र हेतुं दर्शयन्ति—**बहिरिति**।

सत्प्रतिपक्षं प्रदर्शयन्ति—**किञ्चेति**।

मतान्तरेण रूपवत्त्वं साधयन्ति—**तत्र साहित्यसर्वस्वकार** इति। भ्रमत्वं निवारयति—**न चासाविति**। भ्रमत्वं हि—तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वम्। स द्विविधः संशयो विपर्ययश्च। एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशयः; यथा स्थाणुर्वा पुरुषो वेति। शरीरादौ निश्चयरूपं यदात्मप्रकारकं ज्ञानं गौरोऽहं, श्यामोऽहं कृशोहमित्याकारकम्। शङ्खादौ पीतत्वामतिश्च विपर्ययः। नीलं नभ इति प्रतीतिस्तु न भ्रमः। स्थाणुर्वा पुरुषो वेतिवत् सादृस्यनिबन्धनतो नायं विषयदोषः, आकाशस्य सादृश्यान्तराभावादसम्भवः। तदेवाह—**विषयगतेति**। विषयो शुक्तावारोपितो रजतादिः, तद्गतश्चाकचिक्यादिरित्यर्थः। **करणेति**। करणमिन्द्रियं नेत्रादि, तद्गतः पित्तादिदोषः। खण्डयति—**नाद्य** इति। धर्मिण आकाश्य प्रमोषो वस्त्वन्तरेणाख्यानं तत्सहकृतस्य नीलत्वारोपस्य तन्त्रत्वाद्युगपत्प्राप्तत्वादिति भावः। करणगतदोषं निवारयति—**न द्वितीय** इत्यनेन। पीतः शङ्खः इति ज्ञानं तु पित्तादिदोषसहकृतमेव तस्य सार्वजनीनप्रत्ययत्वाभावात्,

तदधिकरणभ्रमायोगात्, अतो बाधकाभावात्सा प्रतीतिः प्रमैव । सामीप्ये नैल्याभावप्रत्यय एव बाधक इति चेत्, न; व्यापकस्याकाशस्य दैशिकपरत्वापरत्वात्मकदूरत्वसामीप्ययोरनधिकरणत्वात्, पुरुषसंसृष्टदेशविवक्षया सामीप्यप्रत्यय इति चेत्, तत्राकाशस्यातीन्द्रियत्वेन सामीप्याद्यविषयत्वात्, नयनसंसृष्टाञ्जनवत्, सागरनीलिमवच्च, समीपे तदग्रहणेप्यदोषात्, तस्माददुष्ट आकाशप्रत्यक्षतापक्षः ।

एवंच पूर्वोक्तमनुमानमपि मानम् । न च द्रवत्वमुपाधिः, तस्य प्रलये पृथिवीतेजःपरमाण्वोः साध्याव्यापकत्वात्, घटवह्न्यादावपि तथात्वाच्च,

---

निवारयति—**सामीप्य** इति । "अतिदूरात्सामीप्यादिन्द्रियघातान्मनोनवस्थानात् । सौक्ष्म्यात्तद्व्यवधानादभिभवात्समानाभिहाराच्च" इति साङ्ख्यस्मृतेरपि अतिसामीप्यात्प्रत्यक्षानुपपत्तिः । नभसि नीलत्वं भ्रमः इति मन्वानस्य मते तस्य व्यापकत्वाद्दैशिकपरापरत्वाभावं प्रदर्शयति—**सामीप्ये नैल्याभावे**ति । वायुभिन्नत्वे सति भूतत्वात्पृथिवीवत् इत्यनुमानमप्यमानम् । पृथिवीतेजःपरमाणुषु द्रवत्वाभावात् । जातिघटकत्वेन नायं दोष इति पक्षं निवारयति—**घटादावि**ति । प्रतिबन्दिं प्रदर्शयति—**व्याप्यधर्मस्यैवे**ति ।

प्रदर्शितानुमाने द्रवत्वस्योपाधित्वं निवारयति—**नच द्रवत्वमुपाधिरि**ति । उपाधित्वं हि पूर्वोक्तानुमाने धर्ममात्रेण विभाजकतया । यथा द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाभावत्वानां पदार्थविभाजकोपाधित्वम् । सच धर्मः क्वचन जातिरूपः, क्वचन च तद्भिन्नः । द्रव्यत्वादयो जातिरूपाः । सामान्यादयस्तु तद्भिन्नाः । जातिधर्मोऽपि द्विविधः सखण्डोपाधिरखण्डोपाधिश्चेति । तत्राद्य आकाशादिः, द्वितीयः प्रमेयत्वकुण्डलित्वप्रतियोगित्वादिः । तदेतत्स्वारस्यमाच्छादयन् वदति साहित्यसर्वस्वकार इति ध्येयम् । **साध्याव्यापकत्वादि**ति । द्रवत्वाद्युपाधौ हेत्वाभासप्रयोजकीभूतमर्थमादायेदम् । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः । तथा च—यस्य यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वं च स तत्साध्यकतद्धेतावुपाधिः । भवति च तत् आर्द्रेन्धनं साध्यस्य धूमस्य व्यापकम् । यत्र यत्र धूमस्तत्रार्द्रेन्धनमिति नियमयोगात् । भवति साधनस्य वह्नेरव्यापकम् । यत्र यत्र वह्निस्तत्रार्द्रेन्धनमिति नियमायोगात् । तप्तायःपिण्डे वह्निसत्त्वेऽपि आर्द्रेन्धनाभावादिति । एवं चात्र साहित्यसर्वस्वकारेण साध्यव्यभिचारोन्नायकतया दूषकत्वेन उपाधिर्निरूप्यत इति ध्येयम् । तदेव हेत्वाभासप्रयोजकीभूतोपाधेः फलम् । यथा केवल-

**घटादौ द्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वेन द्रवत्वसिद्धेर्न साध्यव्यापकत्वमिति चेत्, न; तद्वृत्तितादृशजातिमत्त्वेन तत्तद्गुणसाधने द्वेषवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वेनेश्वरेऽपि द्वेषापत्तिः। किञ्च, व्याप्यधर्मस्येव विशेषणव्यापकधर्मस्यापि नियामकत्वापत्तिः। तदिष्टत्वे गन्धवद्वृत्तिपृथिवीत्वव्यापकजातिमत्त्वेनाकाशादावपि गन्धादिसाधनापत्तिः। न चैवं घटवद्द्रव्यादावसत्त्वेन द्रवत्वं पृथिवीतेजसोर्भागासिद्धं स्यादिति वाच्यम्। इष्टापत्तेः। तस्यालक्ष्य-**

---

श्रयत्वं प्रत्यक्षविषयत्वव्यभिचारि उद्भूतरूपाभाववद्बहिर्द्रव्यत्वावच्छिन्नवायुवृत्तित्वादितिरीत्या हेतौ साध्यव्यभिचारः साधनीयः। साधनावच्छिन्नसाध्यव्यापकोपाधिस्थले उदासीनधर्मावच्छिन्नसाध्यव्यापकोपाधिस्थले च जन्यत्वं प्रमेयत्वं च विनाशित्वव्यभिचारि भावत्वाभाववज्जन्यध्वंस वृत्तित्वादितिरीत्यासाध्यव्यभिचारो हेतौ साधनीयः। केचित्तु, सत्प्रतिपक्षोत्थापकतया दूषकत्वमुपाधेर्वदन्ति। सत्प्रतिपक्षोत्थापकत्वं च स्वाभाववत्त्वरूपहेतुना साध्याभावानुमितिजनकत्वम्। यथा आद्ये अयोगोलकं धूमाभाववत् आर्द्रेन्धनसंयोगाभावादिति। द्वितीयादिषु यद्धर्मविशिष्टसाध्याभावानुमितिजनकत्वं सम्भवति। यथा वायुः बहिर्द्रव्यत्वविशिष्टप्रत्यक्षविषयत्वाभाववान् उद्भूतरूपाभावात्, ध्वंसः जन्यत्वविशिष्टविनाशित्वाभाववान् भावत्वाभावादित्यादिरीत्या। पर्वतो धूमवान् वह्नेः, प्रागभावो विनाशी जन्यत्वादित्यादौ तु सत्प्रतिपक्षोन्नायकतया दूषकत्वं न सम्भवति, पक्षे तत्र साध्यस्य सत्त्वात्; किन्तु एतादृशस्थले साध्यव्यभिचारोन्नायकतया दूषकत्वमेवेति गृह्यते। ननु सत्प्रतिपक्षोन्नायकतया दूषकत्वपक्षे तत्तद्धर्मविशिष्टो यः साध्यः तदभावस्यैव सिद्धत्वेन एतादृशसाध्याभावनिश्चयस्य तत्तद्धर्माविशेषितसाध्यविषयकप्रकृतानुमितिप्रतिबन्धकत्वाभावेन तत्तत्पक्षे तत्तत्साध्यसिद्धिर्दुर्वारेति चेत्, न; तादृशानुमितावपि तत्तद्धर्मसमानाधिकरणस्यैव साध्यस्य विषयत्वसम्बन्धेन तादृशबाधनिश्चयाप्रतिबध्याया अनुमितेः सम्भवेऽपि अभिमतसाध्यस्यासिद्धेः। यत्र च पक्षे बाधनिश्चयो नियतस्तत्र पक्षेतरः पक्षेतरत्वं वा उपाधिर्भवत्येव, यथा वह्निरनुष्णः पदार्थत्वात् इत्यत्र वह्नीतरत्वमुपाधिः। कुत्रचित्साध्यसाधनोर्व्यापकोऽप्युपाधिर्दृश्यते, यथा, करका पृथिवी कठिनसंयोगादित्यत्रानुष्णाशीतस्पर्शवत्त्वमुपाधिः। एवमुपाधेः प्रायशो दोषान्तरसाङ्कर्यं विद्यत एव। **व्याप्येति**। यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यमिति नियमेन तादृशव्याप्यधर्मस्येवेत्यर्थः। तथाच वह्निसामानाधिकरण्यं धूमे धूमत्वेनावच्छिद्यते। उपाधौ तूपाधिना। अत एव साधनतावच्छेदकभिन्नेन येन साधनताभिमते साध्यसम्बन्धोऽवच्छिद्यते स एव तत्र साधने विशेषणमुपाधिरित्यत आह—**विशेषणेति**। **भागासिद्ध-**

त्वात्। यथोपलम्भं तन्नियमस्य युक्तत्वादिति, यद्यप्यत्राकाशभिन्नत्वमुपाधिस्तथापि साध्याभावोपाध्यभावयोर्वायौ व्यभिचरितत्वेन पक्षे साधनाव्यापकत्वस्यादूषकत्वेन च न तत्सम्भवः। एतेन द्रवत्वाभावस्य रूपाभावसाहचर्यादुपाधिदृढीकरणमुत्क्षिप्तम्।

वस्तुतस्तु, द्रवत्वं जल एव। नच घृततैलसुवर्णादौ वह्न्यादिसंसर्गेण तदुपलब्धिस्तर्हि न स्यादिति शङ्क्यम्। तदन्तर्गतानां जलांशानामेव तद्वत्ताभ्युपगमेन तदभिव्यक्त्योपलम्भसम्भवात्। अन्यदा तदनुपलब्धिस्तु हिमकरकादाविव पार्थिवभागबाहुल्यादभिव्यञ्जकासंयोगाद्वेत्याहुः। अपिच द्वितीयानुमाने द्रव्यारम्भकत्वोपाधिस्तु रूपवदंशावयविनि साध्याव्यापकत्वान्निरस्तः। आद्यक्षणावच्छिन्ने बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वरूपभूतत्वस्य हेतोरभावान्न व्यभिचारोऽपि। विरुद्धभूतत्वयोराद्यविवक्षायां तद्वद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्मस्य भूतत्वस्येव मूर्तत्वस्य मनसि। द्वितीयविवक्षायां भाट्टानां शब्दे

---

गन्धवती घटत्वात् इत्यादौ पृथिवीत्वसामानाधिकरण्येन पटादौ घटत्वाद्यभावः। यथा वा पृथिव्यादयश्चत्वारः परमाणवोऽनित्या गन्धवत्त्वादिति। अत्र गन्धवत्त्वं हेतुः पक्षीकृतेषु सर्वेषु नास्ति, पृथिवीमात्रवृत्तित्वात्। अत एव भागे स्वरूपासिद्धत्वम्।

जलादितरत्र द्रवत्वाभावं साधयति—**वस्तुतस्त्विति**। तदुदाहरणान्तरं यथा घटशब्दावभिधेयौ मूर्तत्वादिति। **शब्द** इति। "श्रोत्रमात्रेन्द्रियग्राह्यः शब्दः शब्दत्वजातिमान्। द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः" इति भाट्टमते शब्दस्य द्रव्यत्वेन स्वीकारात्। तथाचेत्थं तदुपपत्तिः—शब्दत्वं नाम जातिस्तन्मते। श्रोत्रग्राह्यत्वे शब्दस्य न विवादः। किन्तु, आकाशगुणत्व एव सः। तथाचाहुः—"वियद्गुणत्वं शब्दस्य केचिदूचुर्मनीषिणः। प्रत्यक्षादिविरोधात्तद्भट्टपादैरुपेक्षितम्" इति। तत्र गुणस्य सर्वत्र साश्रयतया प्रतीयमानत्वादिह च निराश्रयतयैव प्रतीतिदर्शनात् प्रत्यक्षविरोधः। शब्दो द्रव्यं साक्षादक्षसम्बन्धसाक्षात्कार्यत्वात् घटवत्, शब्दो द्रव्यं सत्त्वे सत्यनाश्रयत्वाद्गगनवत्, इत्याद्यनुमानविरोधोऽपि। नचास्यानाश्रयत्वमसिद्धमिति वाच्यम्; प्रतीतिविरोधात्। विमतं द्रव्यं शब्दाश्रयो न भवति द्रव्यत्वात् सम्प्रतिपन्नद्रव्यवत् इति निराश्रयत्वसिद्धेश्च। शब्दो द्रव्यं न भवति श्रोत्रग्राह्यत्वात् शब्दत्ववत्, इति अद्रव्यत्वं साध्यमिति चेत्, न; शब्दो गुणो न भवति श्रोत्रग्राह्यत्वात् शब्दत्ववत्, इत्येताभ्यामेव हेतुभ्यां गुणत्वनिवृत्तेरपि सुसाधनीयत्वात्।

---

पुनरेनमेव युगपदुपलम्भं व्यक्तिभेदेन समर्थयन्ति । व्यक्तीनां च विनाशित्वमभ्युपगच्छन्ति । स एवायं गकार इति प्रत्यभिज्ञानस्य तु जातिगोचरत्वमपि कल्पयन्ति । तच्चायुक्तम्—यस्य हि प्रत्यभिज्ञानस्य बलवत्प्रमाणविरोधेन व्यक्तिगतमेकत्वं गोचरीकर्तुमशक्यं तस्यैव जात्यात्मना प्रत्यभिज्ञानकल्पने सोऽयं देवदत्त इत्यादावपि तथात्वप्रसङ्गात् । न चात्र बाधकप्रमाणं किञ्चिदुपलभ्यते । ननु उत्पन्नः शब्दः, विनष्टः शब्द इत्यादिप्रत्ययोऽत्र बाधक इति चेत्, न; नित्यविभुत्वेन सम्मतानामपि गगनादीनां खननपूरणानन्तरभवस्य जननविनाशप्रत्ययस्येवाभिव्यञ्जकसान्निध्यसदसद्भावनिबन्धनत्वात् । नित्यः शब्दः सत्त्वे सत्यकारणत्वात् व्योमवत् इति नित्यत्वसिद्धिः । नच ताल्वादिव्यापाराणां कारणत्वदर्शनादकारणत्वमसिद्धमिति वाच्यम्, ताल्वादिव्यापाराणां खननादेर्मूलोदकाभिव्यञ्जकत्ववदभिव्यञ्जकत्वस्यैवोपपत्तेः । ताल्वादिव्यापारः शब्दकारणं न भवति व्यापारत्वात् सम्प्रतिपन्नव्यापारवत् इत्यकारणत्वसिद्धेश्च । ननु ताल्वादिव्यापारः शब्दकारणं भवति शब्दस्य तदनन्तरभावित्वात् । यो यदनन्तरभावी स तत्करणकः यथा कुलालव्यापारानन्तरभावी घटस्तत्कारणक इति तस्य कारणत्वमपि साध्यमिति चेत्, न; मूलोदकादौ व्यभिचारात् । नच ताल्वादिव्यापाराणामभिव्यञ्जकत्वे शब्दानां विभुत्वादभिव्यक्तस्य वर्णस्य सर्वोपलभ्यत्वप्रसङ्गः इति वाच्यम्; ताल्वादिव्यापारोत्पन्नध्वनिश्रोत्रसंयोगस्यैवाभिव्यञ्जकत्वाङ्गीकारात्, ध्वनीनां वायुविशेषत्वात्, तत्प्रेरकताल्वादिबलानुसारेणादूरश्रवणादिव्यवस्थोपपत्तेश्च । यथाह भगवान् शबरः—"अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रति योधमानाः सर्वतो दिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते । अनुपरतेषु शब्द उपलभ्यते, नोपरतेषु" इति । यत्रैकस्य गकारस्य तीव्र—तीव्रतर—मन्द्रमन्द्रतरत्वादिविरुद्धधर्मानुपपत्तेर्भिन्ना एवैते गकारा इति वाच्यम्, एकस्मिन्नेव मुखे मणिदर्पणकृपाणाद्यभिव्यञ्जकभेदेन भिन्नत्वप्रतीतिवत्, तदभिव्यञ्जकध्वनिधर्मसमारोपेण वर्णेऽपि भिन्नत्वप्रतीत्युपपत्तेः । ज्वालैकत्वप्रत्यभिज्ञानवत् भ्रान्तिमूलमिदं वर्णैकत्वप्रत्यभिज्ञानमिति न वाच्यम्; कारणदोषबाधकप्रत्यययोरन्यतरस्याभावे भ्रान्तिमूलत्वकल्पनानुपपत्तेः । ज्वालैकत्वप्रत्यभिज्ञानं हि ज्वालाया विशीर्यमाणावयवत्वदर्शनात्, तेनावयविविशरणस्याप्यनुमेयत्वादेकस्यामेव वर्तिकायां ज्वलद्दीपनिवारणे दीपान्तरोद्दीपने च विहितेऽपि तदनवलोकयतः सैवेयं ज्वालेति पूर्ववदेव प्रत्यभिज्ञानदर्शनाच्च विषयगतसादृश्यादिदोषनिबन्धनमिति शक्यावगमम् । गकारप्रत्यभिज्ञाने तु विनाशप्रतिनियतलिङ्गादर्शनाद्विषयदोषकारणदोषयोरन्यतरस्यादर्शनाच्च न भ्रान्तिमूलकल्पनमुपपद्यते । तस्मादखिललोकैरपि युगपदुपलभ्यमानोऽयमेक एव गकारः । अपि च शब्दो-

**वेदान्तिनामज्ञानेऽस्मन्मते तमस्यतिव्याप्तेः । वक्ष्यते च तमसो द्रव्यत्व-**

---

एवं च सिद्धाः शब्दस्य द्रव्यत्वनित्यत्वसर्वगतत्वादयः । स पुनरयं शब्दो वाचकावाचकभेदेन द्विविधो भवति । तत्रावाचको भेरीप्रहरणादिजन्यध्वनिव्यङ्ग्यः । अन्यस्तु ताल्वादिव्यापारजन्यध्वनिव्यङ्ग्यो वर्णात्मकः । यथाहुः—"वर्णात्मकानां शब्दानां सम्भूयैकार्थवाचिनाम् । समाहारपदं प्राहुराचार्यमतकोविदाः ॥ उत्तीर्णवर्णं यत्किञ्चित्तत्त्वं स्फोटपदोदितम् । वर्णव्यङ्ग्यं पदं प्रोक्तं पतञ्जलिमतानुगैः ॥" इति । तत्र तावदुत्तीर्णवर्णे पदस्वरूपे किं प्रमाणम् । ननु अस्ति तावदेकं पदमिति प्रत्यक्षानुभवः । नासौ वर्णविषयः, तेषामनेकत्वादिति तदतिरिक्तत्वासिद्धिरिति चेत्, मैवम्; यथाऽनेकपदारब्धं वाक्यमेकवाक्यार्थावबोधकत्वादेकबुद्धिविषयं भवति तथाऽनेकेषामपि वर्णानामेकपदार्थप्रतिपत्तिहेतुत्वेनैकबुद्धिविषयत्वोपपत्तेः । नहि दृष्टे सत्यदृष्टकल्पनावकाशः । तस्मात् पदे वाक्येऽप्येकत्वबुद्धिरेकार्थावबोधकत्वादेव । वर्णे पुनरेकत्वप्रतीतिर्नानुपपन्नेति वर्णातिरिक्तपदकल्पनानवकाशः । यत् पुनर्वर्णानां पदत्वमक्रमव्युत्क्रमपठितेभ्योऽपि वर्णेभ्योऽर्थप्रतीतिप्रसङ्गादसङ्गतमित्युक्तं, तद्वर्णानां स्फोटाभिव्यञ्जकत्वपक्षेऽपि समानमेवेति न स्फोटाभिधानं पदान्तरं द्रव्यान्तरं वा कल्पनीयम् । एतादृशस्य पदस्य पदार्थेन सह प्रत्याय्यप्रत्यायकलक्षणः सम्बन्धोऽपि नित्य एव । पदपदार्थसम्बन्धः साङ्केतिक ईश्वरोऽत्र सङ्केतयितेति तार्किकाणां मतम् । तदपि तार्किकेश्वरनिराकरणेन निरस्तं वेदितव्यम् । गवादिजातिरेव गवादिपदवेदनीया । व्यक्तिस्तु गामानयेत्यादिवाक्येषु जातेरानयनादिक्रियान्वयानुपपत्त्या लक्ष्यते । एवम्—"अनित्यत्वे हि शब्दानां शशशृङ्गप्रहारवत् । शब्दात्मकानां वेदानां नित्यत्वं हास्यतां व्रजेत् । इति सङ्क्षिप्य वादोऽयं विस्तरेण प्रपञ्चितः ॥" इति । तथाच शब्दस्य द्रव्यत्वेनातिव्याप्तिरिति ध्येयम् । **तमसी**ति । "ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथाभासो यथा तमः" इति द्वितीयस्य नवमे भागवते तमसोऽतिरिक्तद्रव्यत्वेन मायाकार्यत्वेन चोक्तत्वादित्यर्थः । तत्र श्रीमदाचार्यचरणैरपि सिद्धान्ते सुबोधिन्यां विषये विषयताख्यं पदार्थं स्वीकृत्य तस्याश्च व्यामोहिकया मायया प्रतीतिः प्रतिपादिता । तथाहि—"विषये विषयता काचित् स्वीकर्तव्या, यया दृष्टिः सविषया भवति । अन्यथा पदार्थानां स्थिरत्वाद्भ्रमदृष्टिर्निर्विषया स्यात् । अतोऽन्यत्रैव सिद्धभ्रमिर्मायया पुरःस्थिते विषये समानीयते । दृष्ट्यनुरोधित्वात्तस्याः । अतो यथाधिकारं जीवसृष्टिं पुरस्कृत्य व्यामोहिकया मायया व्यात्यासेन पदार्थाः सम्पाद्यन्ते । एवं सर्वत्र जगति सा बुद्धिभ्रमं जनयति, अन्यत्रान्यविषयतां सम्पादयति । विषयता मायाजन्या, विषयो भगवान् । मायायामेव विषयतारूपं भगवतः स्वरूपं प्रकटितमिति । तदपि न निःस्वभावम् । आत्मशक्तित्वान्मायाऽपि

च विद्यमानं न प्रकाशयति । अविद्यमानं प्रकाशयति । ननु सार्वजनीनप्रतीत्यनुरोधेन जगद्रूपोऽयं विषयो ब्रह्मणो भिन्न एव कुतोऽनाङ्गीक्रियते, इति चेत्; यस्मात्कारणादविद्यमानमेव बोधयति विद्यमानं न बोधयति, तस्मात्कारणात्तां मायामेव विद्यात् । न हि विषयश्चक्षुर्वा जडं नियतस्वभावमन्यथाप्रतीतिहेतुर्भवति । तत्र दृष्टान्तः—यथाऽऽभासो यथा तम इति । यथा द्विचन्द्राद्याभासो माययैव जन्यते, न तु प्रतीत्यनुरोधेन चन्द्रद्वयं कल्प्यते; एवं विषयताऽपि मायया जन्यते । बुद्धिस्तु चिद्विलास इति न मायाजनिता । अन्यथा ब्रह्मविदोऽपि बुद्धिस्तथा स्यात्, ततश्च सर्वविप्लवः । सा च विषयता द्विधा । आच्छादिकैका, अन्यथाप्रतीतिहेतुकाऽपरा । सा, उभयविधाऽपि माययैव जन्यते, यथाऽऽभासः । ननु मायायाः कथमेवं पदार्थजनकत्वम् । व्यामोहजनकत्वमेव तस्याः । न च विषयातिरिक्ता विषयता क्वचिदुपलब्धा । यथाऽन्धकारः पदार्थस्तेजोऽभावे जन्यते । यत्रैव तेजोऽभावस्तत्रैवान्धकारं जनयति माया । इयमेव व्यामोहिका । अत एव दिवाभीतान्प्रति नान्धकारं जनयति । ते तु तेजोऽभावमेव गृह्णन्ति । तेषां दृष्टेः कोमलत्वाद्बलवत्तेजो दृष्टिप्रतिबन्धकं भवति । तदभावे सुखेन विषयान् गृह्णन्ति । अस्मदादीनामपि तेजो न विषयसंस्कारकम्, नवा चक्षुषः, किन्तु तेजोऽभावे मायया तमोजननात् सैव दृष्ट्या विषयीक्रियते, न तु विषयः" इत्यादि । तथाचायमर्थः—नटादयो हि यद्दृष्टिं व्यामोहयन्ति तानेव मायिकं पदार्थं दर्शयन्ति, नेतरान् । तथेयमपि यद्दृष्टिं व्यामोहयति तानेव तमः प्रदर्शयतीति तमश्चाक्षुषत्वेन तद्दृष्टिव्यामोहत्वेन कार्यकारणभावात् पेचुकादिदृष्टीनां दोषरहितत्वेन तान् प्रति तदभावेऽप्यस्मद्दृष्टिविषयतया तादृशाधिकरणे तमःसिद्धिरप्रत्यूहा । नच तेजोऽभावस्यैव तमस्त्वान्न विषयानुपपत्तिरिति भ्रमस्य विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वात् प्रकृतभ्रमस्यापि तथात्वाच्चाक्षुषत्वं युक्तं, चक्षुःसंयुक्तविशेषणतारूपविशेष्यभानसामग्रीतद्विशेषणज्ञानमात्रस्यैवावश्यकत्वेन विशेषणीभूतनीलरूपाभावेऽपि तज्ज्ञानस्य सत्त्वान्नीलरूपतेजोऽभावयोरसंसर्गाग्रहमात्रेणैव तादृशभ्रमोपपत्तेर्नीलचाक्षुषस्याभिमानमात्रत्वान्न तेन तमोरूपपदार्थसिद्धिरिति वाच्यम्, नीलज्ञानस्य स्मरणादिरूपतया वक्तुमशक्यत्वेन तत्र चाक्षुषेऽभिमानत्वस्य वक्तुमशक्यत्वात् । ननु स्मरणरूपत्वे किं बाधकमिति चेत्, उच्यते; अमावस्यारात्रौ सुधाधवलितगृहादौ दिनसम्बन्धिनीं वार्तां कुर्वतः सदृशादृष्टचिन्तादीनां संस्कारोद्बोधकानामभावेन तादृशस्मरणस्याशक्योदयत्वमिति जानीहि । न चादृष्टमेव तदोद्बोधकमिति वाच्यम्; दृष्टसामग्रीं विना तस्याकिञ्चित्करत्वात् । ननूपनीतभानरूपमेव नीलज्ञानं तत्रेति चेत्, न; मानसोपनीतभानत्वे पूर्वोक्तयुक्त्या उपनायकस्य स्मरणस्य संस्कारस्य वा तदानीं वक्तुमशक्यत्वेन तदभानापत्तेः । चाक्षुषोपनीतभानत्वं तु तादृशस्थले नीलाभावादेवासङ्गतम् । नच चक्षुर्गतं नैल्यं तत्रारोपितं

यदपि प्राभाकराः, तेजोज्ञानाभाव एव तमः, सत्यपि तेजसि तदज्ञाने तमःप्रत्ययादित्याहुः; तदपि न; ज्ञानाभावज्ञानस्य मानसत्वेन नीलं तम इति चाक्षुषत्वव्याघातात् । अभिमानत्वव्याघातात् । तस्मान्नीलचाक्षुषानुरोधेन पदार्थान्तरमेव तम इति सिद्धम् ।

भाट्टास्तु द्रव्यान्तरं तमः प्राहुः । अस्पर्शत्वे सति रूपवत्तमः । तच्च नेत्रेन्द्रियमात्रग्राह्यमालोकाभावप्रकाश्यं कृष्णरूपम् । "कलापकोमलच्छायं दर्शनीयं भृशं दृशाम् । तमः कृष्णं विजानीयादागमप्रतिपादितम्" इति । तत्पुनरन्धतमसादिरूपम् ।

आलोकाभावस्तम इति तार्किकाः । तदयुक्तम् । यतः, "गुणकर्मादिसद्भावादस्तीति प्रतिभासतः । प्रतियोग्यस्मृतेश्चैव भावरूपं ध्रुवं तमः ॥ नीलादिरूपमुक्तस्य स्पर्शवत्त्वं च दृश्यते । स्पर्शाभावान्न रूपि स्यात्तम इत्यप्यपेशलम् ॥ स्पर्शयुक्तस्य सर्वत्र रूपवत्त्वं च दृश्यते । रूपाभावेन वायोरप्यस्पर्शत्वप्रसङ्गतः" इति । स्पष्टदृष्टरूपस्पर्शत्वं चोभयत्रापि तुल्यम् । आलोकादर्शने सति ग्राहकभूतात्मस्वरूपोपलम्भात् सामान्यतो नीलद्रव्यस्मरणे सति स्मृतित्वमगृह्णतस्तयोर्भेदाग्रहनिबन्धनस्तमोनैल्यव्यवहार इति गुरुमतम्, तदपि हास्यम्, आत्मग्रहणस्य नैल्यस्मृत्या भेदाग्रहे सति इदं नीलमिति व्यवहारमपहाय अहं नील इति व्यवहारस्वीकारप्रसङ्गात् । देशान्तरे कालान्तरे चाप्यबाधितस्य प्रत्ययस्य भ्रान्तिमूलत्वकल्पनानुपपत्तेश्च । ननु तमसश्चाक्षुषत्वे पिहितपटललोचनस्य पिहितलोचनस्यात्यन्तान्धस्य च कथं नीलं तम इति प्रतीतिः ? तत्र पिहितपटललोचनस्य पिहितलोचनस्य च तत्तदावरणच्छायाग्रहणात् तमोव्यवहारः । महत्त्वभ्रमस्तु सामीप्यदोषात् । पक्ष्मादीनामग्रहणं तु निमीलनदशायामालोकाभावात् । उन्मीलनदशायामार्जवस्थित्यभावादिति द्रष्टव्यम् । अत्यन्तान्धानां पुनर्नीलबुद्धिरसिद्धा । तमसीव प्रविष्टोऽहमित्यादिवाक्यं पुनः अमृतमिव पाथः पीतमित्यादिवाक्यवत् वाक्यान्तरश्रवणजनितसंस्कारवशादिति द्रष्टव्यम् । "तमः कृष्णमास्थित" इति श्रुतिरपि तमसो नीलरूपतामनुवदति । तस्मात् द्रव्यान्तरं तमः, नीलात्मकत्वात् नीलोत्पलनैल्यवत् । पृथिवीगुणस्तम इति कौमारिलेष्वेव केचिन्मानरत्नावलीकारादयः प्राहुः ।

शाङ्करमतानुयायिनश्च आनन्दज्ञानस्वामिनोऽपि तमसो दशमद्रव्यत्वं स्वीकुर्वन्ति । तथाहि— द्रव्ये नवत्वनिर्बन्धो नैव सिद्धिमुपाश्नुते । तमसो दशमस्यापि संसिद्धेर्मानयुक्तितः ॥ न हि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणीति युक्तम्, रूपादिमतस्तमसो दशमस्य दृश्यमानत्वात् । नचाप्रतीतावेव प्रतीतिभ्रान्तिरालोकप्रतीत्यास्तमःप्रतीतेरविशेषात् । नच प्रकाशानपेक्षचक्षुषो रूपिधीजनकत्वानुपपत्त्या 'तमो नीलम्' इतिधीः सिताभावविषयत्वे-

मुपरिष्टात् । योऽपि यदि रूपवान् स्यात् पृथिव्यादित्रयं स्यादित्यादिरुत्प्रेक्षितस्तर्कः सोऽपि दुस्तर्क एव । वायुभिन्नत्वे सति निष्क्रियत्वोपाधिग्रासात् । यदि रूपवान् न स्याद्वायुभिन्नत्वे सति बहिरिन्द्रियग्राह्यविशेषगुणवान्न स्यादिति प्रतितर्कपराहतेश्च । न च स्पर्शवत्त्वमुपाधिः, प्रभायां साध्याव्यापकत्वात् । तत्राप्यनुद्भूतः स्पर्शोऽस्तीति चेत्, न, मानाभावात्, स्पर्शवद्वृत्तित्वादिविवक्षायाः प्रागुक्तरीत्याऽपक्षिप्तत्वात् । रूपवत्त्वेन तत्साधने त्वग्ग्राह्यत्वस्योपाधित्वात् । अपि च रूपं पृथिव्यादित्रयाकाशेतरवृत्त्यत्यन्ताभावप्रतियोगिवायुस्पर्शेतरबहिरिन्द्रियग्राह्यविशेषगुणत्वाद्गन्धादिवत् । शब्दो रूपसमानाधिकरणः तादृशविशेषगुणत्वाद्रसादिवत् । द्रव्यत्वासामानाधिकरण्यमुपाधिरिति चेत्; विषमव्यापक-

---

तद्व्यञ्जकत्वम् । गौरवात् नेति चेत्, न; व्यञ्जकमादाय व्यङ्ग्यापलापेऽतिप्रसङ्गात् । अन्वयव्यतिरेकौ च व्यञ्जकविषयत्वेऽन्यथासिद्धौ । नचालोकसंसर्गाभावे तदीयप्रागभावादिविकल्पानुप्रवेशाद्व्यञ्जकत्वानुपपत्तिराशङ्कितव्या; तदीयतमस्त्वानुपपत्तेरपि विकल्पद्वारायास्तुल्यत्वात्, अनिर्व्यक्ततावादे च प्रतीत्यनुसारिणो व्यङ्ग्यव्यञ्जकभावस्य सुवचत्वात् । यत्तु, विमतः तमःशब्दवाच्यः परस्पराभावातिरिक्तालोकसंसर्गाभावत्वादालोकवदिति व्यतिरेक्यनुमानम्, तदसत्, विमतः प्रकाशशब्दवाच्यः, इतरेतराभावातिरिक्ततमःसंसर्गाभावत्वात्; तमोवत्, इत्यपि व्यतिरेकिणो वक्तुं शक्यत्वात् । मनस्त्वं स्पर्शवदवृत्तिवेगवद्वृत्तिजात्यन्यत्, जातित्वात्, गोत्ववत्, इत्यपि प्रयोक्तुं सुकरत्वात् । आत्मत्वं स्पर्शवदवृत्तिज्ञानवृत्तिजात्यन्यम्, जातित्वादित्याभाससमानतेति चेत्, तर्हि सर्वास्वेव महाविद्यास्वेवमाभाससमानतासम्भवादुच्छिन्नसङ्कथास्ताः स्युः । परमतेन तत्प्रयोगोऽस्माकमिति, न, अनिष्टापत्तिः । तदेवं मूलकारणस्यैव बहिर्विवर्तमानस्य तमोव्यवहारालम्बनस्य दशमत्वसम्भवान्न द्रव्येषु नवत्वनियमसिद्धिरिति । **उपरिष्टादि**ति । साहित्यसर्वस्वे । वैशेषिकाभ्युपगतमनुमानं निराकरोति–**योऽपि रूपवान् स्यादि**ति । **दुस्तर्कः** । बाधिततर्कः । तदेव दर्शयति—**वायुभिन्नत्वे सती**ति । स्पर्शवत्त्वस्योपाधित्वमपि दूषयति—**न चे**ति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नं यत् साध्यं तदव्यापकत्वादित्यर्थः । अन्यथा पक्षधर्मावच्छिन्नत्वादिकमादाय दोषतादवस्थ्यम् । व्यापकत्वं नात्राधिकदेशवृत्तित्वम्, किन्तु, तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तद्वन्निष्ठभेदप्रतियोगितानवच्छे-

त्वात्, प्रलयकालीनतेजःपरमाणुषु साध्याव्यापकत्वाच्चेति। न च विभुत्वनिःस्पर्शत्वाभ्यां सत्प्रतिपक्ष इति वाच्यम्। आद्ये स्पर्शवत्त्वस्य, द्वितीये वेगवत्त्वस्योपाधित्वात्। नचोपाधेः सत्प्रतिपक्षोत्थापकतया सत्प्रतिपक्षे न दूषकत्वमिति वाच्यम्। उपाधेर्हेत्वाभासत्रितयोत्थापकतया निर्णयात्। उपाधेर्व्यतिरेकोपसंहारे सत्प्रतिपक्षोत्थापकत्वेन प्रसज्यतां दूषकत्वम्। प्रकृते तदभावेन तस्यादूषकत्वाच्च। एतेनाकाशस्य रूपवत्त्वे सिद्धे प्रत्यक्षसिद्धिरप्रत्यूहैव।

स्यादेतत्। चक्षुरिन्द्रियजन्यद्रव्यसाक्षात्कारत्वावच्छिन्ने महत्त्वसमानाधिकरणरूपवत्त्वस्य कारणत्वात्। वियति च प्रत्यक्षपरिपन्थिनः परममहत्त्वस्य सत्त्वात्कथं तत्प्रत्यक्षमिति चेत्; उच्यते, लाघवेन अणुपरिमाणेतरपरिमाणसमानाधिकरणरूपत्वस्यैव प्रयोजकत्वात्। पक्षी चलति, नेह पक्षी, इह पक्षी इत्यादिप्रत्ययानामपि वियत्प्रत्यक्षसाधकत्वमुपपद्यते। आलोकमण्डलविषयत्वे तु तदपगमेऽपि तथाप्रत्ययानापत्तिः। इहेति निर्देशानुपपत्तिश्च तद्भूदेशोर्ध्वभागानुगमेन प्रत्ययस्य देशविषयत्वापादनं प्रत्यभिज्ञानिर्वहणं चानिर्वहणमेव तदुपेक्षितमित्यलं विस्तरेणेत्येवमाकाशस्य रूपवत्त्वं साधयतिस्म।

---

ण्यस्याव्यापकतया तादृशविशेषगुणत्वे च व्यापकतया तथेति भावः। **साध्याव्यापकत्वादि**ति। प्रलयकालीनतेजःपरमाणुषु द्रव्यत्वासामानाधिकरण्यस्यावृत्तत्वादित्यर्थः। शब्दो रूपसमानाधिकरणो विभुत्वात्, शब्दो रूपसमानाधिकरणो निःस्पर्शत्वादिति सत्प्रतिपक्षेण साधयितुं वारयति—**न चे**ति। तत्राप्युपाधिं दर्शयति—**आद्य** इति। सत्प्रतिपक्षस्यानुमितिदूषकतया स्वीकारादुपाधेरपि तदुत्थापकत्वेन दोषाभावमाशङ्क्य निवारयति—**नचे**त्यादिना।

पुनः प्रकारान्तरेणाकाशस्य रूपवत्त्वं दर्शयति—**चक्षुरिन्द्रियजन्ये**त्यादिना। प्रतिबन्दिं निवारयति—**वियति च प्रत्यक्षपरिपन्थिन** इत्यादिना। निवारयति—**लाघवेने**ति। आकाशाश्रयतां दर्शयति—**पक्षी**त्यादिना। **एवमाकाशस्य रूपवत्त्वं साधयतिस्म।** साहित्यसर्वस्वकारः। अत्रेदमवधेयम्-यद्यपि साहित्यसर्वस्वकारेणाकाशस्य रूपवत्त्वं महता प्रपञ्चेन प्रसाध्यते, तथापीदं न सर्वसम्मतम्। सर्वत्रापि तस्य नीरूपत्वेनैव स्वीकारात्। साहित्यशास्त्रेऽपि तथैव सिद्धत्वाच्च। शारदातनयोऽपि भावप्रकाशने सप्तमाधिकरणे "इह तत्त्वानि षट्त्रिंशच्छिवः शक्तिः सदाशिवः। ईश्वरः शुद्धविद्येति शुद्धान्येतानि पञ्च च। माया कालोऽथ नियतिः कला विद्या ततः परम्। रागः पुरुष एतानि शुद्धाशुद्धानि सप्त वै। ततः प्रकृति-

**सिद्धान्तस्तु—नाकाशे रूपम् । उपरिनीलं पश्यत आकाशं पश्यामीत्येव प्रत्ययात् । नीलं नभः पश्यामीत्यत्रापि न गुणत्वेन नभसो भानम्, गुणत्वेन नीलसत्त्वे मानाभावात् । घटादौ पाकादिना रूपपरावर्तने तन्निष्ठनीला-**

---

वायुभिः । वह्न्यम्भःक्षितिभिश्चैते कार्यकारणमूर्तयः ॥" इत्येवम्प्रकारेण शुद्ध—शुद्धाशुद्ध—अशुद्धभेदेन, आत्मतत्त्व—विद्यातत्त्व—शिवतत्त्वभेदेन च प्रत्यभिज्ञादर्शनोक्तानि शाम्भवसिद्धान्तोदितानि वा तत्त्वानि भावसाधनतया प्राह । तत्रापि व्योम्नो नीरूपत्वेनैव स्वीकारदर्शनाच्च ।

स्याद्वादिनस्तु—उत्पादव्ययध्रौव्यात्मकत्वान्नित्यत्वानित्यत्वमाचक्षते । तथा च अवगाहकानां जीवपुद्गलानामवगाहदानीयग्रह एव तल्लक्षणम् । "अवकाशदमाकाशम्" इति उत्तराध्ययनसूत्रोक्तेः । यदात्रावगाहका जीवपुद्गलाः प्रयोगतो विस्रसातो वा एकस्मान्नभःप्रदेशात् प्रदेशान्तरमुपसर्पन्ति तदा तस्य व्योम्नस्तैरवगाहकैः सममेकस्मिन्प्रदेशे विभाग उत्तरस्मिंश्च प्रदेशे संयोगः । संयोगविभागौ च परस्परं विरुद्धधर्मौ; तद्भेदे चावश्यं धर्मिणो भेदः । तथा चाहुः "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः, कारणभेदश्चेति", ततश्च तदाकाशं पूर्वसंयोगविनाशलक्षणपरिणामापत्त्या विनष्टम्, उत्तरसंयोगोत्पादाख्यपरिणामानुभवाच्चोत्पन्नम् । उभयत्राकाशद्रव्यस्यानुगतत्वाच्चोत्पादव्ययोरेकाधिकरणत्वम् । तथाच यद् "अप्रच्युतानुत्पन्नस्थिरैकरूपं नित्यम्" इति नित्यलक्षणमाचक्षते, तदपास्तम् । एवम्विधस्य कस्यचिद्वस्तुनोऽभावात् । "तद्भावाव्ययं नित्यम्" इति तत्त्वार्थसूत्रोक्तमेव लक्षणं सत्यं नित्यलक्षणम् । उत्पादविनाशयोः सद्भावेऽपि तद्भावादन्वयिरूपाद् यन्नव्येति तन्नित्यमिति तदर्थस्य घटमानत्वात् । यदि हि अप्रच्युतादिलक्षणं नित्यमिष्यते तदोत्पादव्यययोर्निराधारत्वप्रसङ्गः । न च तयोर्योगे नित्यत्वहानिः; "द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः । क्व कदा केन किंरूपा दृष्टा मानेन केन वा" इति सम्मतितर्कोक्तेः । लौकिकानामपि घटाकाशं पटाकाशमिति व्यवहारप्रसिद्धेराकाशस्य नित्यानित्यत्वम् । घटाकाशमपि हि यदा घटापगमे पटेनाक्रान्तं, तदा पटाकाशमिति व्यवहारः । तत्रायमौपचारिकत्वादप्रमाणमेव । उपचारस्यापि किञ्चित्साधर्म्यद्वारेण मुख्यार्थस्पर्शित्वात् । नभसो हि यत्किल सर्वव्यापकत्वं मुख्यं परिमाणं तत् तदाधेयघटपटादिसम्बन्धिनियतपरिणामवशात् कल्पितं सत् प्रतिनियतदेशव्यापितया व्यवह्रियमाणं घटाकाशपटाकाशादितत्तद्व्यपदेशनिबन्धनं भवति । तत्तद्घटादिसम्बन्धे च व्यापकत्वेनावस्थितस्य व्योम्नोऽवस्थानान्तरापत्तिः, ततश्च अवस्थाभेदेऽवस्थावतोऽपि भेदः । तासां ततोऽविष्वग्भावादिति सिद्धं नित्यानित्यत्वं व्योम्न इति ।

देर्गुणत्वनिश्चयेन प्रकृते वैलक्षण्यात्। नच वायुभिन्नत्वे सति महत्त्वात्पृथिवी-वदित्याद्यनुमानेन सिद्धिः। नीरूपः परममहत्त्वादात्मादिवत्, इति प्रत्यनुमानेन सत्प्रतिपक्षत्वात्। नापि वायुभिन्नत्वे सति बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वादित्यनेन, तत्र स्पर्शवत्त्वस्योपाधित्वात्। नच तस्य प्रभायां साध्याव्यापकत्वमिति वाच्यम्, तस्या गुणत्वेन रूपवत्त्वाभावाददोषात्। पृथिव्यादित्रयभिन्नत्वादित्यनेन सत्प्रतिपक्षत्वाच्च। न चात्र वायुभिन्नत्वे सति निष्क्रियत्वमुपाधिरिति वाच्यम्, तस्य मनसि साध्याव्यापकत्वेनानुपाधित्वात्। अतः पुराणादौ तेजोविशेषगुणत्वेनैव रूपस्य निरूपणादाकाशे तदुपगमो न प्रामाणिकः। नच "यद्धूम्रं तद्वायोर्यन्नीलं तन्नभसः" इतिश्रुतिसिद्धत्वान्न तथेति वाच्यम्; तस्यास्तद्देवतारूपपरत्वेनाप्युपपत्तेः। अन्यथा वायावपि धूम्रवर्णापत्तेः। नच 'खं काकाण्डाभगोक्षाभम्' इति वृष्टिलक्षणेषु ज्योतिर्वचनान्नैवमिति वाच्यम्, 'यत्र कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। सिद्धिं तत्र विजानीयात्तस्मिन्स्वप्ननिदर्शने' इति श्रुत्या स्वप्नस्य सिद्धिसूचकत्ववत्तादृशभ्रमस्य वृष्टिसूचकत्वेऽपि वचनोपपत्तेः। तस्मादाकाशे रूपप्रतीतिर्भ्रान्ता एव। न चोक्तरीत्या भ्रमहेतोर्निर्वक्तुमशक्यत्वान्नेदं साम्प्रतमिति वाच्यम्। रूपवद्द्रव्यग्राहकस्य चक्षुषो मध्ये रूपवद्द्रव्याभावेन दूरगमने आकाशे नीलमिव दृश्यत इति चक्षुरसामर्थ्यदोषस्यैव हेतुत्वात्। नच तत्र रूपवतां सूर्यकिरणानामेव

---

नीलत्वस्याकाशत्वे मानाभावादित्यर्थः। **वायुभिन्नत्वे सतीति**। पुरोदीरितानुमानमपि न प्रमाणम्। तत्र सत्प्रतिपक्षं प्रदर्शयन्ति—**नीरूप** इति। दूषणान्तराण्याहुः—**नापीति**। वैशेषिकास्तु सुमेरुदक्षिणशृङ्गस्येन्द्रनीलमणिमयस्य प्रभामालोकयतो नीलं नभ इति प्रतीतिर्भ्रम एवेत्याहुः। केचन सुदूरं गच्छच्चक्षुः परावर्तमानं स्वचक्षुःकनीनिकामाकलयत्तथाभिमानं जनयतीति वदन्ति, तदयुक्तम्; पिङ्गलसारनयनानामपि तथाभिमानात्। यत्तु दधिधवलमाकाशमिति प्रतीतेर्धवलत्वं साधयति कश्चित्, तन्न; मिहिरमहसां विशदरूपाणामुपलम्भात्तथाभिमतेः।

पूर्वोक्तं प्रभायां साध्याव्यापकत्वं परिहरन्ति—**नचेत्यादिना**। तस्याः प्रभायाः। **गुणत्वेनेति**। गुणे गुणानङ्गीकारादिति भावः। आकाशो नीरूपः पृथिव्यादित्रयभिन्नत्वादिति **सत्प्रतिपक्षत्वात्**। निष्क्रियत्वेनोपाधिना सत्प्रतिपक्षवारणं निवर्तयन्ति—**नचेति**। **मनसि साध्याव्यापकत्वेनेति**। तत्र प्रमाणं निर्दिशन्ति—**अत एव पुराणादा-**

सत्त्वात्कथं रूपवद्द्रव्याभाव इति वाच्यम्, तेषां विरलत्वेनायोग्यतया तत्सत्ताया अप्यभावकल्पत्वात् । अन्यथा 'छायायां साचि तिष्ठतोः' इत्याद्यसंलग्नानामपि तेषां दर्शनप्रसङ्गात् । नच सार्वजनीनत्वान्नायं भ्रम इति वाच्यम्, देहात्मभ्रमवदुपपत्तेः । योगिनां तदभावादसार्वजनीनः स इति चेत्, तुल्यम्; कपिलादीनामेव तथावचनात् । एतेनैवाग्रे बाधाभावोऽपि प्रत्युक्तः । नन्वेवं सति सामीप्ये नीलभ्रमापत्तिरिति चेन्न, दूरत्वस्यापि सहकारित्वात् । न च विभौ दूरत्वमनुपपन्नमिति वाच्यम्, 'तद्दूरे तद्वदन्तिके' इति श्रुतौ विभुन्यपि ब्रह्मणि तदङ्गीकारादत्राप्युपपत्तेः, प्रदेशदूरत्वस्य शक्यवचनत्वाच्च । किञ्च, गन्धर्वनगरवदाकाशे तादृशवस्तुसामर्थ्यादपि तादृशभ्रमोपपत्तिः । न चाकाशस्यातीन्द्रियत्वात्तदधिकरणभ्रमायोग इति वाच्यम्, वस्तुसामर्थ्येन तस्याप्यैन्द्रियकत्वात् । अन्यथा कालवदवकाशस्याप्यप्रत्ययापत्तेः । ननु वस्तुसामर्थ्यात्प्रमैव कुतोनाङ्गीक्रियत इति चेत्, पुराणादौ रूपानुक्तेरिति वदामः । तर्हि अवकाशप्रत्ययोऽपि भ्रमोऽस्त्विति चेत्, न; बहिरन्तरव्यवहारविषयत्वस्य भूतानां छिद्रदातृत्वस्य च शास्त्रेणैवोक्तत्वात्, तस्माद्वस्तुसामर्थ्यजन्यत्वाविशेषेऽपि, आकाशे नीलरूपं प्रत्येमीत्येव प्रतीतिर्भ्रान्ता । ननु नीलाभिन्नमाकाशं पश्यामि, आकाशं वा पश्यामीति । एतेनाकाशे सर्वदा सूक्ष्मनीलमेघसत्त्वमङ्गीकुर्वन्तोऽपि निरस्ता ज्ञेयाः । एवमेवान्धकारप्रतीतिरपि ज्ञेया । तस्यापि पदार्थान्तरत्वात् । यथेदं, तथान्धकारवादे प्रपञ्चितमिति न पुनः प्रपञ्च्यते ।

तेनैतत्सिद्धम् । चक्षुः स्वसामर्थ्येनाकाशं न गृह्णाति, आकाशमेव तु

---

**नचेति** । **देहात्मेति** । असार्वजनीनत्वं च तस्य प्रतिपादयन्ति—**योगिनामिति** । **बाधाभाव इति** । युक्त्यन्तरेणेति शेषः । सामीप्ये भ्रमापत्तिमाशङ्क्य निवारयन्ति—**नन्विल्यनेन** । विभुन्यपि दूरत्वसामीप्यव्यवहारं समर्थयन्ति—**नचेत्यादिना** । उपपत्त्यन्तरं भ्रमे युक्त्या दृष्टान्तेन च साधयन्ति—**किञ्चेति** । अतीन्द्रियत्वेनाप्याकाशस्याधिकरणत्वं प्रदर्शयन्ति—**नचे**त्यारभ्य **प्रत्ययापत्तेरि**त्यन्तम् । वस्तुसामर्थ्यादाकाशे रूपप्रतीतिर्न भ्रमः, अपि तु प्रमैवेति पूर्वपक्षिनः प्रतिबन्दिं निराकृत्य शब्दप्रमाणं समर्थयन्ति—**नन्विति** । **वदामः** । स्वोक्तलक्षणे परस्याशङ्कानुवादपूर्वकं बहिरन्तरव्यवहारस्य भ्रमत्वं निवारयन्ति—**तर्हीत्यादिना** । सिद्धमाहुः—**एतेनेति** । **एवमिति** । **तस्यापीति** । अन्धकारस्य पदार्थान्तरत्वं, उक्तरीत्या

स्वसामर्थ्येन स्वात्मानं ग्राहयति, गन्धर्वनगरवत्पिशाचवच्चेति दिक्। एतेनै-वाकाशप्रतिबिम्बतत्प्रतीती अपि व्याख्याते ज्ञेये। अस्य च शब्द एव विशेष-गुणः 'तस्य मात्रा गुणः शब्दः' इति वाक्यात्। विशेषगुणत्वं च कारणेऽनु-द्भूतत्वे सति स्वस्मिन्नुद्भूतगुणत्वम्। इत्याकाशः"

आकाशप्रादुर्भावमुक्त्वा वायोराह—वायुरिति। वायुर्हि पञ्चलक्षणको रूपरहितश्च,

अत्रापि पण्डितपुरन्दरास्तत्रैव। "अथ वायुः—तल्लक्षणं तु अरूपित्वे सति चालनव्यूहनद्रव्यशब्दगन्धनयनसर्वेन्द्रियबलादानाख्यकार्य-त्वमेकमेव। तदुक्तम् 'चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः। सर्वेन्द्रिया-णामात्मत्वं वायोः कर्माभिलक्षणम्' इति। तत्र चालनं शाखादेः, व्यूहनं पतिततृणादेर्वात्यैर्मेलनम्, प्राप्तिर्गन्धस्य घ्राणप्रापणम्, द्रव्यनयनं च द्रव्यस्य घटादेरन्यत्र नयनम्, शब्दनयनं तु पूर्वमुपपादितम्, सर्वेषामिन्द्रियाणां बल-दश्चायम्, एतदभावे किमपीन्द्रियं कार्यक्षमं न भवतीति। एवं च प्राणरू-पोऽपि सङ्गृहीतो ज्ञेयः। अस्य च स्पर्शो विशेषगुणः। शब्दश्च कारणान्वयात्

---

आकाशमुक्त्वा वायुमाहुः—**वायुरिति**। इहापि सर्वतन्त्रस्वतन्त्रादिबिरुदालङ्कृतो भाष्यकारः श्रीपुरुषोत्तमसम्मतिं प्रदर्शयन् प्रस्थानरत्नाकरमेवावतारयाञ्चकार "**अथ वायुरित्यादि भव-तीतीत्यन्तम्**। तत्राऽयमाशयः स्यात्, लक्ष्यतावच्छेदकसमनियतत्वे प्रदर्शनीये यथा तल्लक्ष-णस्य, लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रति-योगित्वे, लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेद-सामानाधिकरण्ये, लक्ष्यतावच्छेदव्यापकीभूताभावप्रतियोगित्वे वा पातो माभूदिति। पुरुषो-त्तमेतिभागवतेतिनाम्नोः स्तम्भनास्त्रप्रयोजकत्वादिति वा। **चालनमिति**। तृतीयस्कन्धे षड्विं-शाध्याये। **कर्मलक्षणमिति**। कर्मैव लक्षणमित्यर्थः। सामान्यलक्षणम् चालनादन्यतया, कर्मकत्वं च विशेषलक्षणम्। **स्पर्शगुण** इति। वायोर्गुणद्वयम्, स्वाभाविकः स्पर्शः; कारणान्वयाच्छब्दश्च। **प्राण** इति। प्राणो दशविधः। ओज इन्द्रियशक्तिः। सहो मनः-

तेनायं द्विगुणः। तदुक्तम् 'नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः। परा-
न्वयाच्छब्दवांश्च प्राण ओजः सहो बलम्' इति।

अयं च मीमांसकमते त्वचा प्रत्यक्षः, यथाहुः—'महदुद्भूतस्पर्शवद्द्रव्यत्वेनैव
त्वचो योग्यता लाघवात्। उद्भूतरूपस्य प्रवेशे गौरवापत्तेः' अतो द्रव्यचाक्षुष-
त्वावच्छेदेनैवोद्भूतरूपहेतुतालाघवादुचिता। एवं च सार्वजनीनप्रतीतिरप्यनु-
कूला भवतीति। इति वायुः" इत्याहुः।

वायोर्निरूपणानन्तरं ज्योतिराह—ज्योतिरिति। पञ्चवृत्तिमत्, प्रकाश-
नादिषट्कार्यकारि।

इहापि श्रीमत्पुरुषोत्तमचरणाः—"अथ तेजः—तस्य च प्रकाश-
नपाचनपानहिममर्दनादनशोषणाख्यषट्कार्यकत्वं सामान्यलक्षणम्। तदुक्तम्—
'द्योतनं पाचनं पानमदनं हिममर्दनम्। तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडे-
वच' इति। तच्च। तत्त्वरूपे एव प्रसिद्धम्। ब्रह्माण्डान्तःस्थे त्वन्यतरवृत्तिकत्वं
लक्षणमिति ज्ञेयम्। तेन चन्द्रादावपि जलकृतो नोष्णस्पर्शाभिभवः। तत्र
द्योतनं प्रकाशनं सूर्यादेरिव, पाचनमौदर्यवह्नेः, पाककरणं वा बहिर्वह्नेः,
फलादेः सूर्यस्यापि, पानं जलादेः, अदनमन्नादेः, इदमप्यौदर्यस्यैव, हिममर्दनं
हिमदूरीकरणम्, शोषणं चानुमेयम्। हिमवाय्वपेक्षया, आतपे वस्त्रादिषु
जलाकर्षणस्य शैघ्र्यात्, एतेनैव सिकताखर्परादौ व्यभिचारः परिहृतो बोध्यः,
पानमदनं चान्तःप्रवेशरूपत्वादेकमेव, तेन पञ्चैव वृत्तयः। क्षुत्तृषौ च तेजो-
रूपे एव; तेन चेतनकर्तृकत्वेऽपि पानादनयोर्न तेजःकार्यत्वहानिः। अस्य च
रूपं विशेषगुणः, शब्दस्पर्शौ च कारणान्वयात्। तेन त्रिगुणम्। तदुक्तम्
"उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत्' इति तेजः" इत्याहुः।

---

रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः, अविभज्य-
मानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत्। नभसि तृणतूल-
स्तनयित्नुविमानादीनां धृतिः स्पर्शवेगवदुभयसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात्
नौकाधृतिवत्। रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीय-
कर्मत्वात् नादपराहताकाशादिकर्मवत्। मतान्तरं प्रदर्शयन्ति—अयं चेत्यादिना।

एवं ज्योतिर्निरूप्य, अपो लक्षयति—आप इति। जलं तु चतुर्गुणयुक्तम्, तदपि प्रस्थानरत्नाकरे—"अथ जलम्—तस्य च क्लेदनपिण्डनतृप्तिप्रीणनाप्यायनप्रेरणतापापनोदनभूयस्त्वाख्याष्टकार्यकत्वं सामान्यलक्षणम्। तदुक्तम्—'क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम्। तापापनोदे भूयस्त्वमम्भसो वृत्तयस्त्विमाः' तच्च तत्त्वरूपे कार्येऽपि च समम्। क्लेदनमार्द्रीकरणं वस्त्रादेः, पिण्डनं सङ्ग्रहः; चूर्णीभूतानां पिण्डतासम्पादनम्, यथा सक्तूनाम्; तृप्तिः क्षुदादिनिवृत्त्या पुरुषस्य सन्तर्पणम्, भुक्त्वाऽपि जलेऽपीते तृप्तो न भवतीति; प्राणनं जीवनम्, आप्यायनं प्राणसन्तर्पणम्, प्रेरणं च प्रवाहादौ प्रवाहेनैव पदार्था नीयन्ते, कूलादिश्च पात्यते, तापापनोदः प्रसिद्धः, भूयस्त्वमेकस्मिन्देशे सजातीयप्रचुरस्यैवावस्थानम्; यद्वा यत्रापः प्रविशन्ति तद्भूयो भवतीति; एवं घृततैलादौ यत्क्लेदकत्वं सङ्ग्राहकत्वं च दृश्यते, सोऽपि जलधर्म एव। वह्न्यादिसंसर्गेण परमभिव्यज्यते कार्यस्य पाञ्चभौतिकत्वात्, तेन नातिव्याप्तिशङ्कालेशः। तेषु जलव्यवहाराभावस्तु भूतान्तरकृतप्रतिबन्धनिबन्धनः करकास्विव। करकास्वपि काठिन्यप्रतीतिर्न भ्रान्ता। तत्र नैमित्तिकस्य तस्य सत्त्वात्। दृत्येवातिशैत्येन संरुद्धे वायौ जलस्य पिण्डने करकोत्पत्तेः। अतएव हिमालयोपत्यकागतगङ्गाप्रवाहोपरि पुरुषाः पद्भ्यां पद्यन्ते। अन्यथा मज्जयेयुरेव। शीतकाले च निर्वाते मिहिकायामम्भसि निशि स्थापिते प्रातश्च तज्जलपात्रेऽधोमुखे कृतेऽपि न तज्जलस्य पातः। छुरिकया विदार्य फलवज्जलस्य भक्षणमपि मध्यदेशीयजनानुभव गोचर इति दिक्।

अस्य च विशेषगुणो रसः। शब्दस्पर्शरूपाणि परान्वयात्, तेनेदं चतुर्गुणम्, तदुक्तम् "तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम्। रूपवत्स्पर्शवच्चाम्भोघोषवच्च परान्वयात्' इति जलमि"त्याहुः श्रीपुरुषोत्तमचरणाः।

अपामभिव्यक्तिं प्रदर्श्य पृथिव्याः प्रदर्शयति—पृथिवीति। तस्या वृत्तयः

---

गुणास्तत्र प्रतीयन्ते। तेजसि भास्वरमेव रूपमुष्ण एव स्पर्श इति नैयायिकास्तन्न रुचिरम्, तथासति वैश्वानरे इन्द्रनीलमण्यादौ, चन्द्रकिरणेषु रत्नप्रभादौ चाव्याप्तिः।

पञ्च; 'भावनं ब्रह्मणः स्थानं धारणं सविशेषणम् । सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम्' इति तृतीये षड्विंशतितमवाक्यात् । अत्र भावनं सर्वपदार्थरूपापादकत्वम्, सर्वमेव भावयतीति । ब्रह्मणः शब्दब्रह्मणः परब्रह्मणश्च हृदयकण्ठादिस्थानरूपत्वम् । धारणं सर्वस्यापि जगतः । सतां सर्वेषामेव तत्त्वानां विशेषणं व्यावर्तकम्, अवयवभूतं वा । काष्ठादग्निं प्रकटीकृत्येतरव्यावृत्तिं जनयति । इतरथा तेजसः स्वरूपमेव क्वापि नाभिव्यक्तमिति कुतो व्यावर्तयेत् । एवं जलमपि स्वान्तर्गतं रसरूपं प्रकटीकृत्य प्रदर्शयति । एवं व्यजनादिना वायुम् । गर्तादिनाऽऽकाशम् । शरीरादावहङ्कारादिसर्वाण्येवेन्द्रियात्मानं च । किञ्च, सर्वसत्त्वानां जीवानां यावन्तो गुणाः, आब्रह्मतृणस्तम्बपर्यन्तं भेदाः, तेषामुद्भेदः पृथिव्यामेवेति सुबोधिन्यां श्रीमदाचार्यचरणा आज्ञापयाञ्चक्रुः ।

विद्वन्मुकुटमणयः श्रीपुरुषोत्तमचरणा अपि प्रस्थानरत्नाकरे—पृथिव्याः स्वरूपमेवं बोधयन्ति—"अथ क्षितिः—तल्लक्षणं तु "भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् । सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम्" इति वाक्यात् । भावनादिपञ्चवृत्तिकत्वं शास्त्रे उक्तम् । तथापि प्रकृते व्यवहारोपयोग्येव विस्तरभिया विवेच्यते । वाक्यव्याख्यानं सुबोधिन्यां द्रष्टव्यम् ।

तत्र रूपवत्त्वे सति साक्षात्सर्वजगद्धारकत्वमित्येकं लक्षणम् । कालादिवारणाय सत्यन्तम् । आवरणतत्त्ववारणाय साक्षादिति । आधारवत्त्वे सर्वतत्त्वव्यावर्तकत्वं वा । न हि काष्ठादिकं वह्निराविर्भवति । न वा पृथिवीं विना समुद्रादिः । न वा व्यजनादिकं विना वायुः । नवा गर्तादिकं विनाऽऽकाशः । न वा शरीरं विना सर्वेन्द्रियादिकमात्मा चाविर्भवतीति सुस्थम् ।

---

एवं सति भावनादिपञ्चवृत्तिकत्वं पृथिवीसामान्यलक्षणम्; एकैकवृत्तिकत्वं च विशेषलक्षणम्, इत्येवं षल्लक्षणानि ज्ञेयानि । गन्धवत्त्वनीलरूपवत्त्वादिकं विशेषलक्षणमेव, सामान्यलक्षणत्वे तु पाषाणशुक्लपटादावव्याप्त्यापत्तिः, अनुद्भूतगन्धादिकल्पनापत्तिश्चेत्यादिकमूह्यम् । प्रस्थानरत्नाकरोक्तं पृथिव्या लक्षणमाहुः—**विद्वन्मुकुटमणय** इत्यादिना । **तत्र रूपवत्त्व** इति । यद्यपि धारणवृत्तिकत्वं प्राणादिधिष्ण्यरूपे, आकाशे, मेघादिधारके वायौ, तेजसि, जले

नैयायिकास्तु—पाकजानुष्णाशीतस्पर्शवती पृथिवीत्याहुः। मुक्तावलीकारस्तु गन्धवती पृथिवीति लक्षयित्वा पाषाणादावव्याप्तिवारणाय यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तिं दर्शितवान्। तदर्थस्तु, यद्द्रव्यं पाषाणभस्माख्यं यद्द्रव्यध्वंसजन्यं पाषाणाख्यद्रव्यध्वंसजन्यं तद्भस्म तदुपादानोपादेयम् पाषाणोपादानभूता येऽवयवास्तदुपादेयमिति। अनया च व्याप्त्या पाषाणारम्भकेषु सिद्धे गन्धे तत्कार्ये पाषाणेऽप्यस्त्यनुद्भूतो गन्ध इति न लक्षणव्यभिचार इति। तदविचारचारु। पाषाणध्वंसजन्यत्ववद्वह्निध्वंसजन्यत्वस्यापि भस्मनि सत्त्वात्पाषाणोपादानोपादेयत्ववत् वह्न्युपादानोपादेयत्वस्याशक्यवचनत्वात्। सति वह्नौ भस्मासम्भवात्। तथा सति वह्नावप्यनुद्भूतगन्धापत्तिर्व्याप्तिव्यभिचारो वेति । नचोद्भूतरूपवद्यद्द्रव्यध्वंसजन्यत्वमत्र विवक्षितम्। तथा च वह्निध्वंसजन्यत्वेऽप्यनुद्भूतरूपवद्वह्निद्रव्यध्वंसजन्यत्वम्, नतूद्भूतवत्तद्ध्वंसजन्यत्वम्, उद्भूतरूपे तस्मिन्ध्वस्तेऽप्यङ्गारसम्भवेन भस्माभावात्। यदाचानुद्भूतरूपः स ध्वंस्यते तदैव भस्म भवतीति न व्यभिचार

---

सजलघटादावतिव्याप्तिवारणाय सांसिद्धिकेति। न चासम्भवः। भूमौ नैमित्तकस्यैव वेगस्यानुभवसाक्षिकत्वात्। सांसिद्धिकत्वे गन्धादिवत् सर्वदाऽनुभवप्रसङ्गात्। यद्यपि पाकजानुष्णाशीतस्पर्शवत्त्वं व्यवहार उपयुज्यते, तथापि पाकजत्वस्य शास्त्रमात्रगम्यत्वेन दुरधिगमादिदमेव सम्यक्। **यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति**। अत्र घटध्वंसप्रत्यक्षे घटोपादानानुपादेये व्यभिचारवारणाय प्रथमं द्रव्यपदम्। अथवा घटध्वंसजन्यरूपध्वंसे व्यभिचारवारणाय तत्। मिथ्याज्ञानध्वंसजन्यकायव्यूहे नवीनमते दण्डप्रागभावध्वंसजन्ये घटे वा व्यभिचारवारणाय द्वितीयं द्रव्यपदम्। प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्यभिचारवारणाय ध्वंसपदम्। ध्वंसत्वेन चेह जनकत्वं विवक्षितम्। तेन प्राचां मते प्रतिबन्धकसंसर्गाभावत्वेन तस्य हेतुत्वेऽपि न क्षतिः। ध्वंसजन्यत्वं चादृष्टद्वारा विवक्षितम्। तेन शालिग्रामशिलाध्वंसजन्ये नारकीयशरीरे न व्यभिचारः। न च दुग्धध्वंसजन्ये दध्नि दुग्धावयवजन्यत्वस्वीकारे दध्नोऽपि दुग्धत्वापत्त्या दुग्धावयवैर्दधि न जन्यत इत्यङ्गीकरणीयम्। तथा च दध्नि व्यभिचार इति वाच्यम्, दध्नो द्व्यणुकातिरिक्तदुग्धध्वंसजन्यत्वास्वीकारात्, द्व्यणुकरूपदुग्धध्वंसजन्यत्वेऽपि तस्य न तत्र व्यभिचारः, तदुपादानपरमाणुजन्यत्वस्य दध्नि सत्त्वात्। न च दुग्धपरमाणु-

नारायणाद्ब्रह्मा जायते ।

इति वाच्यम् । तथापि दग्धकर्करे व्यभिचारात्, उद्भूतरूपवह्निध्वंस एव दग्धता सम्भवात्, सति वह्नावङ्गारव्यवहारात्, जलादिसेकेनानुद्भूतध्वंसे तु भस्मताऽसम्भवात्, अतो दुर्वारस्तत्र व्यभिचारः ।

यत्तु—तेजोऽवयवानां विजातीयद्रव्यं प्रत्युपादानत्वादत्रोपादानपदे विजातीयोपादानता विवक्षिता, अतो विवक्षां विनैव निर्वाह इति, तन्न, सुवर्णरूपं विजातीयद्रव्यं प्रति तेजोऽवयवानामेवोपादानत्वात् । अत एवं वक्तव्यम्—यन्निःस्नेहं गुरुद्रव्यं निःस्नेहगुरुद्रव्यध्वंसजन्यं तन्निःस्नेहगुरूपादानोपादेयम्, अथवा, यद्गन्धवद्द्रव्यमितरध्वंसजन्यं तत्स्वजातीयोपादानोपादेयमिति । एवं भस्मारम्भकावयवेषु गन्धसिद्धौ तदुपादेये पाषाणेऽपि साजात्यादनुद्भूतगन्धसिद्धिर्भवति, तथापीयं नासत्कार्यवादिनामुपयोगिनी, अवयवेष्वसन्नेव गन्धो निमित्तवशाद्भस्मन्येवोत्पद्यते, तत्प्रागभावस्य तत्र सत्त्वात्कपालेषु घटवत्, द्वितीयक्षणे गुणवदिति । अत इदमपि तन्मतमपाकुर्वत्सत्कार्यवादमेव स्थापयतीति सुसमर्थितं स्वमतमिति दिक् ।

अस्याश्च विशेषगुणो गन्धः । शब्दस्पर्शरूपरसास्तु कारणान्वयात् । तदुक्तम्—'विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् । परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः' इति । तेनेयं पञ्चगुणा । इति पृथिवी" इति ।

तस्या विश्वधारकत्वं प्रकटयति—विश्वस्य धारिणीति ।

एतावता प्राणाद्यष्टानां नारायणात्प्रादुर्भावं प्रतिपाद्य ब्रह्मादीनामुपदिशति—नारायणाद्ब्रह्मा जायत इति । ब्रह्मा समष्टिप्राणवान् रजोगुणाभिमानी नारायणात्प्रादुर्भवति "मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम् । ततस्तस्मै वरान्प्रीतो ददावहमनुत्तमम् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च" इति भारतवाक्यात् । समष्टिप्राणवत्त्वं तु "यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् । आकाशाद्घोषवान्प्राणो मनसा स्पर्शरूपिणा । छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः" इत्येकादशस्कन्धीयैकविंशाध्याये तथोपदिष्टत्वात् । तस्य रजोगुणाभिमानित्वं तु "राजसो ब्रह्मा" "सत्त्वं रजस्तम

**नारायणाद्रुद्रो जायते। नरायणादिन्द्रो जायते। नारायणात्प्रजापतिः प्रजायते। नारायणाद्द्वादशादित्या रुद्राः—**

इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिहिरेति विरिञ्चिसञ्ज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः” इति योगचूडामण्युपनिषद्भागवतवाक्ययोरन्यत्र च स्फुटमेव। रुद्रस्याह—**नारायणाद्रुद्र** इति। भगवतो रुद्रस्तमोगुणाभिमानी संहाराधिष्ठाता आविर्भवति। रोदनादेव तस्य रुद्रत्वम्। “सोऽरोदीद्यद्रोदीत्तदेव रुद्रस्य रुद्रत्वम्” “एते हीदं सर्वं रोदयन्ति” इति श्रुतिभ्याम्। तमोगुणाभिमानित्वं तु “तामसो रुद्रः” इति योगचूडामण्युपनिषदि पूर्वोक्तभागवतवाक्येऽन्यत्र च प्रसिद्धम्। इन्द्रप्रभवमाह—**नारायणादिन्द्र** इति। इन्द्र ऐश्वर्यवान्, इदिधातोरैश्वर्यबोधकत्वात्। तथैश्वर्यलाभोऽपि भगवद्भक्त्यैवेति “दशार्णाद्यास्तेऽपि सङ्क्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत्” इति गोपालपूर्वतापिन्युपनिषच्छ्रुतिव्यक्तः। प्रजापतेराह—**नारायणात्प्रजापतिरि**ति। आदित्यरुद्रवसुवेदानां नारायणादाविर्भावं लक्षयति—**नारायणादि**ति। ‘विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः। धाता विधाता वरुणो मित्रः शक्र उरुक्रमः” इति षष्ठस्कन्धीयषष्ठाध्यायवाक्याद्द्वादशादित्याः। रुद्रा अपि “रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः। अजैकपादहिर्बुध्न्यो बहुरूपो महानिति” इति तत्रत्यवाक्यादेकादशरुद्राः। कल्पभेदेन “मन्युर्मनुर्महिनसो महान् शिव ऋतुध्वजः। उग्ररेता भवः कालो वामदेवो धृतव्रतः” इति तृतीयद्वादशवाक्यादेकादशरुद्रा नारायणाज्जायन्ते। नचात्र परशिवस्य नारायणात्प्रादुर्भावाभावः शङ्क्यः। तस्योत्पत्तेः “नारायणाद्रुद्रो जायते” इति श्रुत्यैकवचनेन पूर्वमेव निर्दिष्टत्वात्। अन्येषां रुद्राणां “रुद्रा वसवः” इति श्रुत्या पृथङ्निर्दिष्टत्वाच्च। अन्यथा श्रुतिद्वयवैयर्थ्यापत्तेः। एकवचनबहुवचन-

---

रुद्रस्येति। रोदयतीति रुद्रः। रोदेर्णिलुक् चेत्यौणादिकेन रकि तत्सिद्धिः। तत्र श्रुतिं-

वसवः सर्वाणि छन्दाꣳसीति । नारायणात्प्रजायन्ते नारायणात्प्रतीयन्ते ।

योर्विरोधापाताच्च । किञ्च, एतदेव यथा तथा "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमाः स एकाकी नर एव" इति श्रुत्या सृष्टेः पूर्वं ब्रह्मेशानादिसर्वनिषेधपूर्वकं केवलनारायणस्यैव सत्त्वमुपदिश्य ततः सृष्टिमुक्त्वा अग्रे "अथ पुनरेव नारायणः सोन्यत्कामो मनसा ध्यायत तस्य ध्यानान्तःस्थस्य ललाटात्र्यक्षः शूलपाणिः पुरुषो जायते" इति श्रुत्या महोपनिषदि नारायणाच्छिवोत्पत्तेः स्फुटं प्रवचनात् । अत्र विस्तरस्तु श्रीमपुरुषोत्तमचरणविनिर्मितप्रहस्तवादे बर्हिर्मुखसुखध्वंसे मत्कृतब्रह्मामृतटीकायां पीयूषलहर्यां च द्रष्टव्यः । वसूनामाह—वसव इति । अष्टौ वसवः, "द्रोणो प्राणः ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः" इति भागवतीयषष्ठस्कन्धवाक्यात् । वेदानामुपदिशति—सर्वाणिच्छन्दाꣳसीति । अर्थवादादिरूपाण्यन्यान्यपि सर्वाणि प्रमारूपाणि "निःश्वसितमस्य वेदाः" इति श्रुत्या अपौरुषेयत्वस्य निःश्वसितत्वस्य च सर्वत्र तौल्यात् । अत एव "वेदाः सर्व एव काण्डद्वयस्थिता अर्थवादादिरूपा अपि" इत्यादिनार्थवादादिरूपस्यापि सर्वस्यैव वेदस्य श्रीमदाचार्यचरणाः प्रामाण्यमङ्गीचक्रुः ।

पूर्वोक्तानां सर्वेषामुत्पत्त्यादित्रयं मायादिसम्बन्धरहितान्नारायणादेव भवतीत्युपदेष्टुमग्रिमं वेदयति—नारायणात्प्रजायन्त इति । पूर्वनिरूपितसाकारत्वकर्तृत्वादिधर्मविशिष्टान्नारायणात्परब्रह्मणः सर्वेऽपि प्रकर्षेण विविधस्वरूपेण जायन्ते, आविर्भवन्ति, "यतो वा इमानि भूतानि जायन्ते" "स वै सर्वमिदं जगत्" "स हैतावानास" "सर्वं खल्विदं ब्रह्म" इत्याद्यनेकश्रुतिप्रामाण्यात् ।

उत्पत्तिमाख्याय स्थितिमपि तस्मादेवेपि प्रतिपादयति—नारायणात्प्रतीयन्त इति । तथास्वरूपेणावस्थानं प्रतीतिः, "सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठानाः" "स सर्वमभवत्" इत्यादिश्रुतिभ्यः सदाद्यंशत्र-

---

अर्थवादादिरूपा इति । "वेदो नारायणः साक्षात" इत्युक्तेः सर्वोऽपि वेदः काण्ड-

नारायणे प्रलीयन्ते ।

येण सर्वप्रपञ्चरूपेण तस्यैव प्राकट्यात्तदंशभूतानां सर्वेषां प्रतीतिरपि तत एवाप्रत्यूहा, "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । प्रवर्तन्त इति पाठे तु प्रवर्तनं प्रवृत्तिः, तस्यैव सर्वबुद्धिप्रवर्तकत्वेन सर्वेषां सर्वत्र प्रवृत्तिरपि नारायणादेव "तमेव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषति, तमेवासाधु कर्म कारयति यमधो निनीषति" "य एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति, विचेति चान्ते विश्वमादौ सुदेवः सनो बुद्ध्या शुभया संयुनक्तु" इत्यादिश्रुतेः । बृहदारण्यकीयान्तर्यामिब्राह्मणाच्च ।

स्थितिमुक्त्वा लयमाह—**नारायणे प्रलीयन्त** इति । पूर्वप्रतिपादितोत्पत्त्यादिकर्तरि नारायण एव लयं प्राप्नुवन्ति, "यत्प्रयन्त्यभिसम्विशन्ति" "परे देवे सर्व एकीभवन्ति" इत्यादिश्रुतेः । एतावता 'यतो वा' इति श्रुत्युक्तं "जन्माद्यस्य यतः शास्त्रयोनित्वात्" इति सूत्रे व्याससमर्थितं च प्रपञ्चस्याभिन्ननिमित्तोपादानकारणत्वं नारायणस्य निरूपितम् । तेन निरङ्कुशजगज्जन्मादिकर्तृत्वेन शास्त्रप्रतिपाद्यत्वं ब्रह्मत्वमिति फलितम् ।

स्यादेतत्, प्रपञ्चस्य मायिकत्वाच्छुक्तिरजतवदध्यस्तत्वमेव । अध्यासश्च हट्टस्थरूप्यदर्शनजन्यसंस्कृत्या तद्गतचाकचक्यादिसाधारणधर्मस्य शुक्तौ प्रतीत्या शुक्त्यज्ञानसहकृतया शुक्तौ रजताध्यास उत्पाद्यते । अन्यथाऽद्वैतभङ्गप्रसङ्ग इति चेत्, मैवम्; दृष्टान्तवैधर्म्यात् । शुक्तिरूप्यतच्चाकचक्यादिसत्यवस्तुसत्त्वेन दृष्टान्ते तथा स्यादपि; परमिह तु क्वचिदप्यध्यासात्प्राक्प्रपञ्चस्यादृष्टत्वेन तज्जन्यसंस्कारस्य सुतरामभावात्कर्तुरप्यभावेनाध्यासस्यैवासम्भवः । शुक्तिरूप्यस्थानीयसत्यप्रपञ्चं विना तज्जन्यसंस्काराभावात् । अध्यासोऽयं कस्येति प्रथमं

---

शङ्कराचार्यमतमुपक्षिपन्ति—**प्रपञ्चस्ये**त्यादिना । भ्रमस्तु सादृश्यज्ञानमपेक्षते, तदेवात्र न सम्भवतीत्याहुः—**दृष्टान्तवैधर्म्या**दिति । **कर्तु**रिति । मनःसंयुक्तचक्षुरिन्द्रियेण शुक्तेः

विचार्यते । जीवस्य ब्रह्मणो वेति ? नाद्यः, अध्यासपक्षिणो जीवस्यापि तन्मध्यगतत्वात् । न द्वितीयः, ब्रह्मणोऽप्यध्यस्तत्वापत्तेः ।

किञ्च, जगदलीकत्वे किं मानम् ? नेदं रूप्यमिति प्रत्यक्षवन्नेदं जगदिति प्रत्ययबाधाभावेन न प्रत्यक्षम् ।

ननु 'प्रपञ्चो मिथ्या दृश्यत्वात्, शुक्तिरजतवदित्यनुमानं प्रमाणमिति चेत्, न, दर्शनयोग्यताया ब्रह्मण्यपि विद्यमानत्वेन तस्मिन्नलीकत्वस्यासम्भाव्यत्वेन दृश्यत्वादिति हेतोर्नैकान्तिकत्वात् । तथापि ग्रहिलतया ब्रह्मणोऽदृश्यत्वाङ्गीकारे "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" "यदा पश्यः पश्यते रुक्मवर्णम्" इत्यादिनिगमवचनानां विरोधो दुर्वारः ।

किञ्च, प्रपञ्चालीकत्वं साधिष्ठानं भवेत् । सामान्यतया वुद्धत्वे बुद्धविशेषवैशिष्ट्यस्याधिष्ठानत्वप्रयोजकताया विशेषशून्यसामान्यरहिते तस्मिन्नसम्भाव्यत्वात् । कल्पितसामान्यविशेषवैशिष्ट्यस्य तस्मिन्नुपलम्भेन तस्याधिष्ठानत्वमविरोधीति न शङ्क्यम्, सामान्यविशेषकल्पनाया अप्यधिष्ठानयुक्तत्वात्तत्रापि कल्पिततद्ग्रहणेऽनवस्थादोषस्य दुष्परिहरत्वात् । सजातीयतत्सदृशवस्तुन्यध्यासस्य नियत्या रजतशुक्त्योः परस्परं चाकचक्यसाधर्म्यस्य विद्यमानत्वेन रजतरूपेण शुक्तेः ख्यानं भवति । तथा ब्रह्मण्यपि प्रापञ्चिकपदार्थरूपत्वेनाख्याने प्रापञ्चिकपदार्थसादृश्याङ्गीकारे साकृतित्वजडत्वाद्यापत्तिर्भविष्यति । साधर्म्यसजातीयत्वभिन्नेऽध्यासस्यासम्भवदुक्तिकत्वात् । अन्यथा परस्परविरुद्धधर्मयोर्विजातीययोः स्तम्भस्य शुक्तावप्यध्यासो भवेदेव । साधर्म्यस्य साक्षात्प्रयोजकत्वं न वयं ब्रूमः, किन्तु संस्कारोद्बोधकत्वेन । तत्र तदुद्बोधस्य तद्भिन्नत्वेनापि सम्भाव्यत्वेन तदभावेऽपि नानुपपत्तिरिति वाच्यम्, तद्भिन्नेनाप्यदृष्टादिनोद्बोधाङ्गीकारे विजातीयवैधर्म्यविशिष्टे चाध्यासासम्भवात् । सादृश्यदर्शनं विनाऽदृष्टादेर्विद्यमानत्वेऽपि तदुपपत्तेरभावाच्च । स्वप्नस्मृत्युद्भावकसंस्कारोद्बोधस्य तदादिना सम्भवदुक्तिकत्वेऽपि भ्रमोद्भावकस्य तस्य तत्सदृशधर्मदर्शनमन्तरा कथञ्चिदप्यनुपलब्ध्याऽदृष्टं न दृष्टेनान्यथयितुं शक्यम् । तथानादरे सर्वकार्यस्यादृष्टेनैव सम्भवे दृष्ट-

कारणस्य दण्डादेर्निरुपयोगित्वापातः। कार्ये तस्यैव हेतुत्वात् । नच विजातीये विजातीयाध्यासे तत्तत्संस्कारोद्बोधाभावेन न सम्भवति, सति तदध्यासे तत्सादृश्यज्ञानस्य न हेतुत्वमिति शङ्क्यम्; रज्ज्वज्ञाने मन्दे तमसि घटाश्वादीनां संस्कारोद्बोधेऽपि तमस्यादृष्टत्वान्न संस्कारोद्बोध एवाध्यासे कारणम्, किन्तु साधर्म्यसम्वित्तिजन्यसंस्कारोद्बोध एव कारणमिति तस्यैव कारणत्वम् ।

ननु साधर्म्यसन्दर्शनजन्यवित्तेस्तद्धेतुत्वे रज्जावनेकाशीविषदण्डभूच्छिद्रमालाजलधारादीनां तत्तत्साधर्म्यज्ञानस्य पृथक्तदध्यासानुरोधेन विद्यमानत्वादेककाल एव कथं न भ्रमोत्पत्तिरिति चेत्, न, भिन्नतत्तदध्यासे तत्तत्साधर्म्यवित्तेर्विद्यमानत्वेऽप्येककाल एव तदभावात् । सादृश्यप्रतीतियोग्युपस्थितियुक्तस्यैव सादृश्यसत्त्वस्य सादृश्यवित्तिकारणत्वात् । अतो यत्प्रकारकप्रतियोग्यवस्थानं तत्प्रकारक एव भ्रमोद्भवः । एककाल एव प्रतियोग्यवस्थाने चाहित्वधारात्वमालात्वादेरेकत्र निश्चयरूपबोधासम्भवः । परस्परविरुद्धधर्माणामेकत्र विद्यमानत्वे विरोध एव न स्यात्, अतो यथाकथञ्चिदेककाल एवावस्थानेऽप्येककाल एव सर्वाध्यासासम्भवः । भ्रमस्यानिश्चयात्मकत्वात् । अतस्तादृशं ज्ञानं संशयात्मकं भवति । तदिष्टमेव । एवमनङ्गीकारे संस्कारस्य कारणत्वेन पृथक्तदध्यासानुरोधेनादृष्टस्योद्बोधकस्य सत्त्वेन युगपदध्यासस्तव मतेऽपि कथं न भवेत्? संस्कारोद्बोधस्य विद्यमानत्वात् । अतो ब्रह्मणि साकारत्वं दुष्परिहरमेव । अतो न कथञ्चिदपि प्रपञ्चस्य भ्रमरूपत्वम् । अद्वैतसिद्धिस्तु ब्रह्मवादे ब्रह्मण एव सर्वरूपत्वात्सरलैवेति न कश्चिद्विप्रतिपत्त्युद्गमः ।

---

भवति न तत्र सादृश्यज्ञानस्य हेतुत्वम्, इति तन्मतमुपक्षिपन्तः सादृश्यबाधमाहुः—**नन्वि**त्यनेन । खण्डयन्ति—**भिन्नेति** । **भ्रमोद्भव** इति । भ्रमस्वरूपं तु तृतीयस्कन्धषड्विंशाध्याये—"संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्" इत्यत्र सुबोधिन्यां द्रष्टव्यम् । संशयादीनां बुद्धिवृत्तित्वेन शुक्तिरूपाधिष्ठाने उत्पन्नेनानिर्वचनीयरजतेन चक्षुःसन्निकर्षस्य सुतरामसम्भाव्यत्वम् । अतः प्रत्यक्षज्ञाने मनइन्द्रियविषयाणां सामान्यज्ञानोत्पादकत्वम्; बुद्धिस्तु विशेषाकारेण संशयादिशब्दवाच्यानि ज्ञानानि जनयतीति ज्ञेयम् । तत्र चक्षुःशुक्तिसंयोगे समानप्रत्यासत्तिरुत्पद्यते, ततो भग-

---

तदानीं रजतस्याभावात्सामान्यज्ञानानन्तरं बुद्ध्या रजतोत्पादनात् । विशेषज्ञाने तु रजतस्य कल्पितत्वेनाऽऽन्तरत्वाद्बुद्ध्यैव ग्रहणम्, नत्विन्द्रियैः, अतः सामान्यज्ञाने शुक्तिरेव विषयी-भूता । तस्या एव सामान्यज्ञानम्, विशेषज्ञानं तु बुद्धिकृतमिति तत्र बौद्धमेव रजतं विषयी-भवतीति निष्कर्षः । तदुक्तं श्रीसुबोधिन्यां श्रीमदाचार्यचरणैः "रजतं तु तदनन्तरं बुद्ध्या जन्यते । विषयीक्रियते । तत्र सा बुद्धिरेव कारणम् । इन्द्रियार्थयोर्मध्ये भाति तन्मृषा" इति । प्रथमस्कन्धे "तेजोवारिमृदां यथा विनिमयः" इत्यत्र सुबोधिन्यां तेजसि वारिबुद्धि-र्मरीचितोये । वारिणि पृथिवीबुद्धिस्तमिस्रायां जलादौ । तथा मण्यादिष्वग्निबुद्धिः । मृदि काचादौ वारिबुद्धिः । मेघेषु चन्द्रबुद्धिः । चन्द्रकिरणेषु वस्त्रबुद्धिः । सजातीया भ्रमाश्च शुक्तिरजतादिषु" एवंच अन्यस्मिन्नन्यस्य धर्माणां प्रतीतिरेवाध्यासः, न तु शुक्तित्वं, रजतत्वं वा मिथ्येति ध्येयम् । तेनेन्द्रियविषययोः सम्बन्धे सामान्यज्ञानानन्तरं यद्बुद्धौ माया मायिकं पदार्थं निर्माय बुद्धिविषयीकारयतीति तद्बौद्धं ज्ञानं भ्रमात्मकम् । तद्विषयश्च मायिको बौद्धो घटादिः ।अयमेव बुद्धौ भातः पदार्थ आन्तरालिकी सृष्टिरित्युच्यते । तस्यैव मिथ्यात्वम् । न तु भगवत्कृतप्रपञ्चस्य घटपटादेः । औपाधिके "घटो भ्राम्यति" "पीतः शङ्खः" इत्यादिभ्रमे तु चक्षुर्ग्राह्ये घटशङ्खादौ भ्रमरिकाकामलाद्युपाधिं पुरस्कृत्य भ्रमणपीतत्वादिरूपो मायिको धर्मो विषयतारूपो मायया सृज्यते । सच धर्मो धर्मिणां घटशङ्खादीनां चाक्षुषे चक्षुषा गृह्यते । अत एव "ऋतेऽर्थं यत्प्रतीयेत" इत्यत्र सुबोधिन्यां "विषयता मायाजन्या विषयो भगवा-निति । विषये विषयता काचित्स्वीकर्तव्या । अन्यथा भ्रमदृष्टिः सविषया स्यादिति । विषयताजनितं ज्ञानं भ्रमात्मकं, विषयजनितं प्रमेति च" इत्युक्तं श्रीमदाचार्यचरणैः । तथा च तं भ्रमणपीतत्वादिरूपं मायिकं धर्ममवलोक्य मायया मोहिता बुद्धिर्धर्मिणं शङ्खादीव पीतत्वादिकमपि वस्तुभूतं निर्धार्य तद्विशिष्टं शङ्खं स्वीकरोति । तदा तद्भ्रमात्मकं ज्ञानं भवति । एवं सति बुद्ध्या पीतत्ववैशिष्ट्येन कल्पित एव शङ्खो मायिकः। न तु चक्षुर्गृहीतः । ननु भगवान् चक्षुषाऽग्राह्यस्तर्हि भवन्मते भगवदात्मको घटः कथं चक्षुषा ग्राह्य इति चेत्, मैवम्; "न चक्षुषा गृह्यते" इत्यादिश्रुतीनां मूलरूपपरत्वाद्गृह्यमाणघटस्य तु भगवतः सदंश-त्वाद्ग्राहकस्येन्द्रियस्यापि तत्सदंशत्वेन दोषासम्भवात् । ग्राह्यस्य घटस्य विषयतावैशिष्ट्येन शुद्धत्वाभाववद्ग्राहकस्येन्द्रियस्यापि विषयतावैशिष्ट्येन तुल्यत्वाच्च । सोऽयमौपाधिको धर्मो रजतादिभ्रमवन्नाधिष्ठाननाश्यः।कामलादिदोषो भ्रमरिकादोषश्च यदा नश्यति तदैव नश्यति । भ्रमरिकादशायां "घटो न भ्राम्यति" इति ज्ञानवतोऽपि भ्राम्यतीति प्रतीतेः सार्वजनीनत्वात् ।

एवंच निरुपाधिके रज्जुभुजङ्गादिभ्रमेऽपि सदपि रज्जुर्गृह्यते चक्षुषा भुजङ्गस्तु बुद्धिकल्पितो

---

इत्यवादि । यथा घटावच्छिन्नगगनमहाकाशयोर्वस्तुतो भेदाभावेऽपि घटोपाधिकृतो ह्यवास्तवो भेदस्तथा विषयताविशिष्टतद्रहितजगतोरपि । घटाकाशश्चलतीति प्रतीतावपि चलनं वस्तुतो घटधर्मः, न तु तदवच्छिन्नस्य; एवं विषयताविशिष्टे जगति उत्पत्त्यादिप्रतीतावपि उत्पत्त्यादि-विषयताया एव धर्मः, न तु तदवच्छिन्नस्य, घटाकाशमहाकाशयोरभेदवद्विषयताविशिष्टतद्र-हितयोरभेदेन वस्तुतस्तदवच्छिन्नजगतोऽपि ब्रह्मरूपत्वात् । एवं शुद्धसंसारिजीवयोरप्यवास्त-वो भेदः संसाररूपोपाधिकृत एवेति ध्येयम् । शुद्धजीवस्य भगवदंशत्वेन संसारिजीवस्यापि तद्रूपत्वेन भेदाभावात् । मिथ्यात्वं तु संसाररूपोपाधिपर्यवसन्नम् । अत एव "जीवसंसार उच्यते" इति श्रीमदाचार्यचरणा निबन्धे आज्ञापयाञ्चक्रुः । तत्रापि "उच्यते न तु जायते, असत्त्वेनास्य गणनात्" इति व्याख्यातं तैः । तेन यो बद्धः स एव साधनसम्पत्तौ मुक्तिमा-प्नोतीति बन्धमोक्षव्यवस्था सम्यगुपपद्यते । एवंच विषयतावैशिष्ट्येन मिथ्यात्वं तदवैशिष्ट्येन सत्यत्वं च प्रपञ्चस्येति ज्ञेयम् । अस्मन्मते तु पारमार्थिकदृष्ट्या प्रपञ्चस्य विषयतारहितत्वात् ब्रह्मात्मकत्वाच्च सत्यत्वम्, व्यवहारे संसाररूपस्य विषयतावैशिष्टस्य मिथ्यात्वम् । मायावा-दिनस्तु व्यवहारे सत्यत्वं पारमार्थिके मृषात्वमिति मन्यन्ते । तदत्र पक्षपातदर्वीकरादष्टहृदयाः सहृदयाः सुधिय एवाकलयन्तु युक्तायुक्तत्वमित्याशास्महे ।

अन्यच्च, केचित् बुद्धेस्त्रिक्षणावस्थायित्वेनामूर्तत्वेन च बहिःक्षेपनिवृत्त्योरशक्यवचनत्वेन बुद्धिकल्पितः संसार आभासरूप इत्यत्र मानाभावं द्योतयन्ति, तस्या अस्थिरत्वात्; तन्मन्दम्; बुद्धिर्हि ज्ञानजनिका शक्तिरहङ्कारभेदः "ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसः" इति द्वितीयस्कन्धोक्तेः । अत एव सा स्थिरेति बोध्यम् । तेन मूर्तायास्तद्वृत्तेर्मायया बहिःक्षेपादिकं न दुर्घटम् । त्रिक्षणावस्थायित्वनियमैकशरणानां तज्ज्ञानतत्प्रागभावध्वंसकल्पनापेक्षया ज्ञान-स्थैर्यकल्पनस्य, विरुद्धवृत्तितिरोभाव्यत्वकल्पनस्यैव च लघुत्वात् । नचोपेक्षाबुद्धौ व्यभिचार इति वाच्यम्; तत्र शीघ्रं विरुद्धवृत्त्युदयेन पूर्वज्ञानतिरोभावेऽपि अन्यत्र तिरोभावादर्शनेन त्रिक्षणावस्थायित्वनियमस्याप्रयोजकत्वात् । नापि मूर्तत्वाभाव इति शङ्क्यम्; अर्थदर्शनोत्तरं नेत्रनिमीलनेन तदर्थाकारस्यानुभवसाक्षिकत्वात् । नचेदानीं मायायाः सर्वदा सत्त्वात्सर्वदा भ्रमापत्तिरिति शङ्क्यम्, संस्कारप्राबल्यस्यापि सहकारित्वात् । अतिरिक्तसंस्काराऽनङ्गीकारपक्षे तूद्बोधकैरेवान्तःशयानाया बुद्धिवृत्तेरुद्बोध इति तदा सदृशादृष्टचिन्तादिरूपोद्बोधकसामग्री-प्राबल्यस्यैव तन्त्रत्वात् । अतः प्रबलसंस्कारेण प्रबलोद्बोधकसामग्र्या वा सहकृता माया बुद्धिं बहिः क्षिपति, नेतरथेति, न सर्वदा तदापत्तिः । आत्मा हि निर्विषयज्ञानात्मकः । बुद्धिस्तु

एतदृग्वेदशिरोऽधीते ॥

अथ नित्यो नारायणः ।

एतावदुपनिषद्भागस्य ऋग्वेदशिरोरूपत्वमुपदिशति—**एतदृग्वेदशिरोऽधीत इति** ।

ऋग्वेदशिरोभागेन नारायणस्य परब्रह्मणो जगत्कर्तृत्वादिकमुपपाद्य साङ्ख्यमायावादादिप्रतिपन्नं जगत्कर्तुर्गौणत्वं मायावच्छिन्नत्वं च परिहरन् सत्कार्यवादनिरूपणाय पूर्वोक्तकर्तृत्वादिधर्मविशिष्टस्य नारायणस्य नित्यत्वं सर्वेषामपि "स सर्वमभवत्" इतिश्रुत्या तदंशत्वेन विभूतित्वेन च तस्यैव प्राकट्यात्तद्रूपत्वप्रतिपादेन नित्यत्वमुपदिशति—**अथ नित्यो नारायण इति** । नित्यस्त्रिकालाबाध्यस्वरूपः सदा वर्तमानः प्रकृत्यनधीनत्वात् । नारायणस्य "नित्यो नित्यानां चेतनश्चेतनानाम्" "हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः । स सर्वदृगुपद्रष्टा तं भजन् निर्गुणो भवेत्" इत्यादिश्रुतिभागवतवचनैर्नैर्गुण्यस्य प्रकृत्यनधीनत्वस्य च स्फुटत्वात् । ननु नित्यत्वं नाम त्रिकालाबाध्यत्वम्, प्रकृत्यनधीनत्वात्; नामरूपक्रियाकर्तृत्वादीनां च प्राकृतत्वमेव, अविद्याकल्पितत्वादनित्यत्वाच्च । एवं निष्क्रिये निर्विशेषे नित्ये ब्रह्मणि तद्धर्माणामेवासम्भवेन कर्तृत्वादिशिष्टे नारायणे नित्यत्वप्रकृत्यनधीनत्वनिर्गुणत्वादीनां चासम्भाव्यतया तद्धर्माणां च मायाशबलितानित्यप्रकृत्यधीनपरकत्वेन शास्त्रे निरूपणात् नारायणस्य मायाशबलितत्वं न तु प्रकृत्यनधीनत्वं परत्वं चेति चेत्,

---

एवमृग्वेदशिरोभागं व्याख्याय यजुर्वेदशिरोभागं व्याचिख्यासवः साङ्ख्यादिमतनिरसनाय जगत्कर्तुर्भगवतो नित्यत्वं ब्रह्मादीनां तदंशत्वेन तदभिन्नत्वं च प्रतिपादयन्ति—**जगत्कर्तुरित्यनेन** । ब्रह्मरुद्रादीनां नारायणांशत्वे प्रमाणमाहुः—**स सर्वमभवदिति** । सर्वं ब्रह्मादितृणस्तम्बपर्यन्तम्, सः, मायातीतो नारायणोऽभवत् । स्वेच्छयेति शेषः । **त्रिकालाबाध्येति** । प्रागभावप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वमिति तु न नित्यत्वलक्षणम् । आविर्भावतिरोभाववादस्वीकारे प्रागभावादीनां तत्रैवान्तर्भावात् । प्रकृत्यनधीनः पदार्थस्त्रिकालाबाध्यो भवतीत्याहुः—**हरिर्हि निर्गुण इति** । **नामरूपेति** । मायावादे "अस्ति

न, अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्तस्य मनसाप्याकलयितुमशक्यरचनस्यानायासेनेच्छामात्रेणोत्पत्तिस्थितिभङ्गकरणस्याप्राकृतत्वात्। "एकोऽहं बहु स्याम्" "स ईक्षाञ्चक्रे" इत्यादिश्रुतिषु निर्गुणप्रकृत्यतीतपरब्रह्मण एवेच्छाया मायासम्बन्धरहितस्यैव कर्तृत्वस्य निरूपणाच्च।

अत्र हि भगवान् बादरायणश्चतुर्लक्षण्याम् "अथातो ब्रह्म जिज्ञासा" इति

---

शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतेः। एवं मायावादमुपक्षिप्य तं खण्डयन्ति—अनेकेति। अनायासेनैव स्वेच्छयैव करणे श्रुतिप्रमाणमाहुः—एकोऽहमिति। निष्कलमित्यादिश्रुतीनां तात्पर्यं पूर्वमेवास्माभिः प्रतिपादितम्, तत्ततोऽवगन्तव्यं जिज्ञासुभिः। ननु नित्यविभोर्न कारणत्वमुपपद्यते। तथाहि–अन्वयव्यतिरेकाभ्यां कारणत्वमवधार्यते, नान्वयमात्रेण, अतिप्रसङ्गात्। नच नित्यत्वेन कालतो व्यतिरेकः, विभुत्वेन च देशतो व्यतिरेकः सम्भवति। नच सोपाधेरसावस्त्येवेति साम्प्रतम्। तथाभूतस्योपाधिसम्बन्धेऽप्यनधिकारात्। जनितो हि तेन स तस्य स्यात्, नित्यो वा? नाद्यः, अयुक्तत्वात्। उपाधिजनकत्वग्राहकव्यतिरेकाभावस्तुल्य एव। नापि द्वितीयः, नित्यविभोरपि व्यतिरेकाभावात्। तथापि चोपाधेरेव व्यतिरेको न तस्य, अविशेषात्। उपाधिमत इति चेन्न, स चोपाधिश्चेत्यतोऽन्यस्य तद्वत्पदार्थाभावात्। भावे वा स एव कारणं स्यात्, इति चेत्, न "पूर्वभावो हि हेतुत्वं मीयते येन केनचित्। व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि" इति श्रीमदुदयनपादोक्तेः। भवेदेवं यद्यन्वयव्यतिरेकावेव कारणम्। किन्तु कार्यान्नियतः पूर्वभावः। स च क्वचिदन्वयव्यतिरेकाभ्यामवसीयते, क्वचिद्धर्मिग्राहकात् प्रमाणात्। अन्यथा कार्यात्कारणानुमानं क्वापि न स्यात्। तेन तस्यानुविधानानुपलम्भात्; उपलम्भे वा कार्यलिङ्गानवकाशात्; प्रत्यक्षत एव तत्सिद्धेः। तज्जातीयानुविधानदर्शनात्सिद्धिरन्यत्रापि न वार्यते। तथापि कोष्ठगत्यानुविहितान्वयव्यतिरेकमेव कार्यात् कारणं सिद्ध्येत्, अन्यत्र तथादर्शनादिति चेन्न, बाधेन सङ्कोचात्। विपक्षे बाधकाभावेन चाव्याप्तेः। दर्शनमात्रेण चोत्कर्षसमत्वात्। सर्वव्यापकानां सर्वान्प्रत्यन्वयमात्राविशेषे कारणत्वप्रसङ्गो बाधकमिति चेत्, न; अन्वयव्यतिरेकवज्जातीयतया विपक्षे बाधकेन च विशेषेऽनतिप्रसङ्गात्। तथाहि कार्यं समवायिकारणवद् दृष्टमित्यदृष्टाश्रयमपि तज्जातीयकारणकम्, आश्रयाभावे किम्प्रत्ययासन्नमसमवायिकारणं स्यात्, तदभावे निमित्तमपि किमुपकुर्यात्? तथाचानुत्पत्तिः सततोत्पत्तिर्वा सर्वत्रोत्पत्तिर्वा स्यात्। अतो नित्यविभोरपि कर्तृत्वे न काऽप्यनुपपत्तिः सम्भवति।

---

स्तसिल् ) ब्रह्मविचारोऽधिक्रियते प्रारभ्यत इत्यर्थः । ब्रह्मण इति शेषषष्ठीसमासाद्ब्रह्मसम्बन्धि सर्वं विचार्यत इति तात्पर्यम् । अत्र सर्वेऽपि वेदान्तसूत्रव्याख्यातारोऽथशब्दमानन्तर्यार्थकमेवाङ्गीकुर्वन्ति । केचन ( १ ) नित्यानित्यवस्तुविवेकः, ( २ ) इहामुत्रफलभोगविरागः, ( ३ ) शमदमादिसाधनसम्पत्, ( ४ ) मुमुक्षुत्वं चेति साधनचतुष्टयसम्पत्त्यनन्तरम्; केचिच्च धर्मज्ञानानन्तरम्, अन्ये च साङ्गवेदाध्ययनानन्तरमिति वदन्ति । इतरेऽथशब्दमधिकारार्थकमिति वदन्ति । तदत्र जिज्ञासूनां सौकर्यार्थं सर्वाण्यपि मतान्यत्र सङ्क्षिप्य सङ्गृह्यन्ते ।

( १ ) तत्रतावच्छङ्कराचार्याः—अथ नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वञ्चेति साधनचतुष्टयसम्पत्त्यनन्तरम्, अतः=अग्निहोत्रादीनामनित्यफलकत्वात्, ब्रह्मज्ञानफलस्य च नित्यत्वाद्धेतोः; ब्रह्मजिज्ञासा=ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा ब्रह्मविषयकज्ञानेच्छा । कर्तव्येति शेषः । इत्याहुः ।

( २ ) शेषावतारास्तु—अथ=साङ्गवेदाध्ययनानन्तरम्, अतः=कर्मणामनित्यफलकत्वज्ञानात्, मोक्षेच्छावतोऽनन्तनित्यफलप्रयोजिका, ब्रह्मजिज्ञासा=ब्रह्मज्ञानेच्छा भवतीतित्याहुः ।

( ३ ) भास्कराचार्याः—अथ कर्मविचारानन्तरम् । अतःशब्देनारम्भे फलप्राप्तौ च हेतुत्वमुच्यते । कर्मणि पूर्ववृत्ते तदपेक्षा ब्रह्मजिज्ञासा कर्तुं शक्यत इत्यारम्भे हेतुत्वम् । कर्मणा समुच्चितं ज्ञानं क्षेमप्राप्तिनिमित्तमिति फलप्राप्तौ हेतुत्वम् । ब्रह्म च कारणात्मना, कार्यात्मना, जीवात्मना च त्रिधाऽवस्थितम्, तत्राविशेषेण ब्रह्मजिज्ञासा प्रस्तूयते । इत्यानन्तर्यार्थकमधिकारार्थकञ्चेत्युभयमुररीकुर्वन्ति ।

( ४ ) निम्बार्काचार्याः—अथ अधीतषडङ्गवेदेन मुमुक्षुणाऽनन्ताचिन्त्यस्वाभाविकस्वरूपगुणशक्त्यादिभिर्बृहत्तमो यो रमाकान्तः पुरुषोत्तमः ब्रह्मशब्दाभिधेयस्तद्विषयिका जिज्ञासा सततं सम्पादनीयेति प्राहुः ।

( ५ ) श्रीकण्ठशिवाचार्यास्तु—अथशब्द आनन्तर्यार्थः, अतःशब्दो वृत्तस्य हेतुभावे वर्तते । यतोऽधीतवेदेन धर्मो विचारितः, अतस्तदनुष्ठानसम्पन्नचित्तशुद्धिना तत्कालसम्पन्नविवेकादिसमुल्लसितपरमभक्तिसम्भावितेनानेन ब्रह्मापि निरतिशयनिःश्रेयसकरं विचारणीयमिति । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति कर्मणि षष्ठीत्याहुः ।

( ६ ) मध्वाचार्याः—अथशब्दो मङ्गलार्थोऽधिकारानन्तर्यश्च । अतःशब्दो हेत्वर्थः । यतो नारायणप्रसादमृते न मोक्षः, अतो ब्रह्मजिज्ञासा कर्तव्येत्याहुः ।

(७) विज्ञानभिक्षवोऽपि—अथ शब्द उच्चारणमात्रेण मङ्गलरूपोऽधिकारवाचकः । अत इत्यत्रे-

---

स्त्यनन्तरम्, अतो यतो ब्रह्मज्ञानं साक्षान्निःश्रेयससाधनसाधनम्, ब्रह्मजिज्ञासा वक्ष्यमाणलक्षणस्य ब्रह्मणो ज्ञातुं साक्षात्कर्तुमिच्छा भवतीत्याह।

तत्र प्रथमे, साधनचतुष्टयसम्पत्तेः प्राग्ज्ञानाभावान्नित्यानित्यविवेकादीनामभावाद्ब्रह्मज्ञानस्य साधनचतुष्टयसम्पत्त्यनन्तरभावित्वाच्च न कदाचित्कस्यचिद्ब्रह्मज्ञानावसरः। सत्यां च सम्पत्तौ सञ्जातवैराग्यस्य वेदान्तवाक्यविचारानवकाशात्कस्यचिदपि विचारशास्त्रे प्रवृत्तिर्न भविष्यतीति ब्रह्मविचारशास्त्रस्य वैयर्थ्यापत्तिः।

द्वितीये, कर्मकाण्डज्ञानकाण्डयोः पूर्वापरीभावस्य अप्रामाणिकत्वात्।

तृतीये, धर्ममीमांसाया ब्रह्ममीमांसातः प्राग्रचनायां प्रमाणाभावादुभयोरेकशास्त्रत्वाभावाच्च। चतुर्थे, वेदाध्ययनानन्तर्यं तु सिद्धमेव, नह्यनधीतवेदो विचारार्थं प्रवर्तते। तदत्र व्यर्थतामापद्यते अथशब्दः।

पञ्चमे—तृतीयवदेव दोषापत्तेः।

षष्ठे—अष्टमेऽपि प्रथमवदेवदोषापत्तिः।

ननु जिज्ञासा नाधिकर्तुं शक्येति चेन्न, जिज्ञासाशब्दस्य विचारे रूढत्वात्, योगाद्रूढिर्बलीयसीति न्यायेन जिज्ञासाशब्दस्य विचार एवार्थः। नच "जिज्ञासितुमिच्छेत्" इति शाबरभाष्यमुदाहृत्य विचारार्थो न वाच्यो भट्टपादैरिच्छायामिच्छाप्रदर्शनात्, तथाहि—"सन्वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता, ज्ञानोपसर्जना सैव न तु विध्यादि गम्यते। इषेस्तुकर्म बाह्यः स्याद्धर्मः सा वाऽथवा द्वयम्। समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः। एवं विषयनानात्वान्न काचित्पुनरुक्तता। सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छाऽत्र सूत्रिता" इति। मन्दाग्नीनां भोजनेच्छायामिच्छादर्शनात् "सा हि तस्य ज्ञातुमिच्छा" इतिवाक्येन शाबरभाष्ये वदतो व्याघातदोषप्रसङ्गाच्चेति वाच्यम्। इच्छाया अकर्तव्यत्वात्, सामान्यतो ज्ञाते विशेषजिज्ञासा विचारं विना न सम्भवतीत्यन्तर्णीतविचारजिज्ञासापदसामर्थ्याद्वेदाध्ययनानन्तरं तद्धेतुको धर्मविचारः कर्तव्यः इति पूर्वमीमांसायाः प्रतिज्ञासूत्रार्थः सम्पद्यते। वार्तिककारमतमनादृत्य जिज्ञासापदस्य विचारवाचित्वेऽपि न काचिदनुपपत्तिः सम्भवति। श्रीभागवतेऽपि "जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम्" "जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनम्" "अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत्" "जिज्ञासायां सम्प्रवृत्तो नाद्रियेत् कर्मचोदनाम्" "जिज्ञासितात्मयाथात्म्यो मुनेर्व्याससुतादसौ" इत्यादिवाक्यकदम्बेषु च जिज्ञासापदस्य विचारवाचित्वं तु प्रसिद्धमेव। अतस्तस्य रूढत्वे न काचित्क्षतिरिति ध्येयम्।

नन जिज्ञासापदस्य विचारार्थमेवाभिप्रेयाद्व्यासस्तदा "अथातो ब्रह्मविचारः" इत्येव वदेत्

**सूत्रे निर्गुणब्रह्मविचारं प्रतिज्ञाय किंलक्षणकं तद्ब्रह्मेत्याकाङ्क्षायां "जन्माद्यस्य यतः शास्त्रयोनित्वात्" इति द्वितीयेन तस्य जगज्जन्मादिकर्तृत्वेन शास्त्रप्रतिपाद्यत्वमुक्त्वा तत्र यत इति पञ्चमीनिर्देशश्रवणान्निमित्तकारणमेव तद्भवतु**

---

ननु "ब्रह्मजिज्ञासा" इत्यत्र कथं शाब्दबोधः, को वा समासः ? धर्माय जिज्ञासेतिवत् चतुर्थीसमासः, षष्ठीसमासो वा ? षष्ठीसमासेऽपि किं कर्मणि षष्ठी शेषषष्ठी वा ? न तावच्चतुर्थीसमासः, यतश्चतुर्थ्यन्तः शब्दस्तदर्थवचनादिभिः शब्दैः समस्यते; तथाहि–"चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति । तदर्थेन प्रकृतिविकृतिभाव एवेष्टः । "तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यम्" इति कात्यायनीयवचनेन यूपदार्वादिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासनियमात्, अप्रकृतिभूते ब्रह्मजिज्ञासेत्येवमादौ तन्निषेधात् । नच "अथातो धर्मजिज्ञासा" इत्यत्रापि धर्माय जिज्ञासेति शबरोक्ताभिमतश्चतुर्थीसमास इतिवाच्यम् "सा हि तस्य ज्ञातुमिच्छा" इत्युक्त्या षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरं नतु विग्रहपरं वाक्यम् इति बोध्यते । यथाहुर्भट्टपादाः—"प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते । तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता, सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः । धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते । प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद्विवक्षितः । सामान्यस्य विवक्षायां तादृशं कथ्यते कथम् । सम्बन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु । विशेषनिष्ठता तस्या भाष्यकारेण वर्ण्यते" इति । नात्र कर्मणि षष्ठी, किन्तु शेषषष्ठी, तेन ब्रह्मसम्बन्धी विचार आरभ्यत इति शाब्दबोधः । अन्यथा द्वितीयाद्यध्यायवैयर्थ्यापत्तिरिति भाष्यप्रकाशे विस्तरः । **जन्माद्यस्येति** । जन्म आदिः पूर्वावधिर्येषां भावविकाराणां ते जन्मादयः । सुपां सुलुगिति ज़सो लुक् । अत्र कुटादिभ्य इतिवदवयवसमासादतद्गुणसम्विज्ञानो बहुव्रीहिः । विकारान्तरज्ञानदशायां जन्मनः प्रव्यक्तत्वाभावात् । न च तदसङ्ग्रहापत्तिः । श्रुतत्वेन पूर्वमेव तस्य बुद्धावारोहात् ।

अथवा, जन्म आदिर्यस्य स्थितिभङ्गस्य तज्जन्मादीति तद्गुणसम्विज्ञानः । अस्येति पुरोवर्ती प्रपञ्च इदमा निर्दिश्यते । अनायासेनोत्पत्तिस्थितिभङ्गकरणं भावविकारादिकं वा यतः; तद्ब्रह्मेति त्वधिकारबलादेवायाति नत्वध्याहारः ।

यद्वा, आद्यस्याकाशस्य प्रधानस्य वा जन्म यत इति । शास्त्रे योनिः शास्त्रयोनिस्तस्य भावस्तस्मात् । योनिशब्दो निमित्तकारणे रूढः । "तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता" इति मातृरूपत्वबोधनात्, मातुश्च भस्त्रात्वात्, तथा च शास्त्रोक्तनिमित्तकारणत्वादित्यर्थः ।

दस्य प्रकृतिवाचकत्वाङ्गीकारात्, तद्वारणार्थं ब्रह्मणि शास्त्रोक्तकर्तृत्वप्रतिपादनस्यावश्यकत्वाच्च। माध्वाः शैवाश्च जन्माद्यधिकरणं शास्त्रयोनित्वाद्यधिकरणं च भिन्नमङ्गीकुर्वन्ति। तेषामाद्यस्य हेतुशून्यत्वात्प्रतिपादकाकाङ्क्षिततया, द्वितीयस्य च साध्यशून्यत्वात्प्रतिपाद्याकाङ्क्षिततयाऽतिक्लिष्टत्वाद्विवक्षितप्रमेयासाधकत्वं वा क्लेशेन साधकत्वं वा बोध्यम्।

(१) शङ्कराचार्यास्तु—"जन्मोत्पत्तिरस्येति तद्गुणसम्विज्ञानो बहुव्रीहिः। जन्मस्थितिभङ्गं समासार्थः। जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च। श्रुतिनिर्देशस्तावत् "यतो वा इमानि भूतानि जायन्ते" इत्यस्मिन्वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात्। वस्तुवृत्तमपि जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसम्भवात्। अस्येति प्रत्यक्षादिसन्निधापितस्य धर्मिण इदमा निर्देशः। षष्ठी जन्मादिजन्यसम्बन्धार्था। यत इति कारणनिर्देशः। अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः" इत्याहुः।

(२) रामानुजाचार्याः—"जन्मादि" इति सृष्टिस्थितिप्रलयम्। तद्गुणसम्विज्ञानो बहुव्रीहिः। "अस्य" अचिन्त्यविविधरचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः। "यतः" यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसङ्कल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणात्सर्वज्ञात्सर्वशक्तेः परमकारुणिकात् परस्मात्पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते तद्ब्रह्मेति सूत्रार्थ इत्याहुः।

(३) पूर्णप्रज्ञभाष्ये तु—"सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षाः, यतः, "उत्पत्तिस्थितिसंहारा वियतिज्ञानमाकृतिः। बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट्" इति स्कान्दे। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसम्विशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति" "य उन्निधातु पृथिवीमुत द्यामेको दधार भुवनानि विश्वा, चतुर्भिः साकं नवतिञ्च नामभिश्चक्रं न वृत्तं व्यतीरवी वियत्परो मात्र्या तन्नावृधाना न ते महित्वमश्नुवन्ते, "न ते विष्णो जायमानो न जातो देवमहिम्न परमं तमाप" "यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा" इत्यादि च। अनुमानतोऽन्ये न कल्पनीयाः। "नावेदविन्मनुते तं बृहन्तं सर्वानुभूतमात्मानं सम्परा ये औपनिषदं पुरुषम्" इत्यादिश्रुतिभ्यः। न चानुमानस्य नियतप्रामाण्यम्। "श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित्। निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च। श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम्। प्रमाणपदवीं गच्छन्नात्र कार्या विचारणा। पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत्। इत्याद्य-

ऽम्बुभुक् क्षणम् । प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् । मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः" इति मोक्षधर्मवचनान्न नास्तिकवादो युज्यते, "दर्शनाच्च तप आदिफलस्य" इत्युक्तम् ।

(४) भास्कराचार्या हि—"जन्म आदिर्यस्य तदिदं जन्मादि सृष्टिस्थितिप्रलयम् । तद्गुणसम्विज्ञानो बहुव्रीहिः, यथा लम्बकर्णमानयेति । अस्येति त्रिजगन्निर्दिश्यते । यत इति कारणम् । यस्मादीश्वरात्सर्वज्ञात्सर्वशक्तेः परमकारणादस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य नियतदेशकालफलोपभोगाश्च अस्याचिन्त्यरचनस्य सृष्टिस्थिति-प्रलयाः प्रवर्तन्ते तद्ब्रह्मेति प्रतिपत्तव्यम् ।" इत्याहुः ।

(५) निम्बार्का अप्येवम् ।

(६) विज्ञानभिक्षवः—"जन्मादि–जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यतीत्येवं रूपं जन्मादिषट्कम् । अस्य जगतः । यतः परमेश्वरादन्तर्लीनप्रकृतिपुरुषाद्य-खिलशक्तिकात्स्वतश्चिन्मात्राद्विशुद्धसत्त्वाख्यमायोपाधिकात्क्लेशकर्मविपाकाशयैरपरामृष्टाच्चेतनवि-शेषाद्भवति तद्ब्रह्मेति" वाक्यार्थमाहुः ।

(७) शैवाः—जन्मादिकं जन्मस्थितिलयतिरोभावानुग्रहरूपं कृत्यम् । अस्य चेतनाचेतन-सम्मेलनसमरसीभूतस्य प्रपञ्चविलासस्य । यतो यस्मात् । तद्ब्रह्मेति शेषः इत्याहुः ।

(८) वैदिकमुनिरपि शङ्कराचार्यवदेव । सर्वेऽप्यत्र तद्गुणसम्विज्ञानबहुव्रीहिमाचख्युः, तन्न; अवयवार्थकानां पदानां हि बहुव्रीहौ बहुधाऽतद्गुणसम्विज्ञानत्वमेव प्रतीयते । संयोगसमवा-यान्यसम्बन्धेन कार्याऽनन्वयितया गुणानां वृत्तिघटकीभूतपदानामर्थोऽन्यपदार्थे प्रधानेऽन्वे-तीत्यतद्गुणसम्विज्ञानत्वम् । अत एव "सर्वादीनि सर्वनामानि" इत्यत्र सर्वशब्दस्य सर्वनाम-सञ्ज्ञाप्रयुक्तसुडागमसिद्ध्यर्थं तद्गुणसम्विज्ञानो बहुव्रीहिः "हलि सर्वेषाम्" इति ज्ञापकबलेन स्वीकृतः । तस्मादवयववाचके बहुव्रीहौ ज्ञापकं विना न तद्गुणसम्विज्ञानत्वमिति ध्येयम् । ननु जन्म आदिर्येषामिति विग्रहवाक्ये बहुवचनमनुपपन्नं, सूत्रे प्रत्यक्षत एवैकवचनस्य दृष्ट-त्वात्, इति चेत्, न; अयं बहुवचननिर्देशो बहुव्रीहेः कर्मधारयत्वगर्भत्वसूचकः । अन्यथा "जन्म आदिः यस्य तत्" इत्थमेव विग्रहः स्यात् । एवं चातद्गुणसम्विज्ञानपक्षे जन्मनोऽपि ब्रह्महेतुत्वप्रतिपत्तये कर्मधारयो गर्भस्थो वेद्य एकशेषेण । तथा च जन्म च तदादिश्च जन्मादिः । जन्म आदिर्येषां तानि जन्मादीनि । जन्मादिश्च जन्मादीनि च जन्मादीति विग्रहो ज्ञेयः । "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति सूत्रेण बहुव्रीहेः शेष एकव-द्भावस्य वैकल्पिकत्वप्रदर्शनार्थं येषामिति बहुवचननिर्देश इति भावः । एवंच ब्रह्मणः सका-शादस्य जगतो जन्मादि आविर्भावतिरोभावादिप्रकारा भवन्तीति ज्ञेयम् । तथाच—"सो

**नतूपादानमपीति शङ्कापनुत्तये "तत्तु समन्वयात्" इतितृतीयमाह । सूत्रार्थस्तु–तच्छास्त्रप्रसिद्धं ब्रह्मैव समवायिकारणम्, तत्र हेतुः समन्वयादिति । सम्यगनुवृत्तत्वात् । अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेणान्वयादिति ।**

---

नानि धारयन्" इत्यादिश्रुत्या जगतो जन्मादिप्रकाराणां तत्तद्रूपेण जगद्रूपेण च भगवानेव क्रीडतीति पुष्टिसृष्टिप्रकारो बोधितः । प्रवाहसृष्टिप्रकारो मर्यादासृष्टिप्रकारश्च पक्षान्तरद्वयेनाभ्युपगन्तव्यौ । एतेनान्येषां भाष्यकाराणां पक्षो निरस्तो ज्ञेयः ।

यत्तु जन्माद्यधिकरणोक्तं न ब्रह्मणः स्वरूपलक्षणं, कार्यलक्षणं वा तस्य ताटस्थ्यात् । तथा च यो हि धर्मो राज्ञश्छत्रचामरादिकमिवासाधारणः सन्नेव कदाचिद्धर्मिणा सम्बध्यते स तटस्थलक्षणमित्युच्यते । मायिकस्य जगज्जन्मादिकारणत्वस्यानृततया परमार्थतो निर्धर्मस्वरूपेण विरोधानुपपत्तेः । आरोपितेन रजतेन शुक्तेरिवारोपितेन जगत्कारणत्वेन ब्रह्मणो लक्ष्यत्वसम्भवाच्च ब्रह्मणा लक्षणं भवत्येवेत्याह कश्चित्, तन्न युक्तम्; कारणत्वस्य ब्रह्मगतत्वेन तटस्थलक्षणासम्भवात् । जगत्कारणत्वस्यारोपितत्वे तु एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गप्रसङ्गाच्च । उपाधिपक्षस्तु शतधा दूषितः पूर्वाचार्यैरित्यलमप्रकृतविचारेणेति ।

**तत्तु समन्वयादिति** । तद्ब्रह्म समवायिकारणं अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेणान्वयात् । नामरूपयोः कार्यरूपत्वाच्च । ननु अस्त्यादिसमन्वयस्य न ब्रह्मसमवायितागमकत्वम् । यथाहुः साङ्ख्याः—"प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" इति गुणानां स्वरूपं वृत्तीश्चोक्त्वा "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः" इति । एतदर्थस्तु—सत्त्वादयो गुणाः सुखदुःखमोहस्वरूपाः प्रकाशप्रवृत्तिनिग्रहफलका यथाक्रमं बोध्याः । ते पुनरन्योन्याभिभवनान्योन्याधारत्वान्योन्यजननान्योन्यमिथुनक्रियावृत्तयः स्वत एव सन्तो यथा वर्तितैले अग्निविरोधीनी सहाग्निना रूपप्रकाशनं कार्यं कुरुतः, यथा वा वातपित्तकफा दोषाः परस्परविरुद्धा अपि शरीरधारणलक्षणं कार्यं कुर्वन्ति, तथैते परस्परविरुद्धा अप्यनुवर्तन्ते, कार्यं च कुर्वन्ति । तथा चानुमानप्रयोगः—महादादिकार्यं सुखदुःखमोहगुणकद्रव्यजन्यं कार्यत्वे सति सुखदुःखमोहगुणकद्रव्यत्वात्, एकैव रूपयौवनशीलवती भर्तृसपत्नीपुरुषान्तराणां सुखदुःखमोहदेतिवत् । नच सुखादीनामान्तरत्वेनानुभवात् स्त्र्यादीनां सुखादिगुणकत्वे मानाभावः शङ्क्यः । स्त्रीचन्दनादिजन्यस्य सुखस्य तत्तदवयवेषु बहिरेवानुभवेन तज्जनकेषु स्त्र्यादिष्वपि तस्य बहिरेव सत्तानिश्चयात् । न च तस्यानुभवस्य भ्रान्तत्वं

विमताः सुखादयो न साक्षादात्मधर्माः, बाह्यत्वे सति आत्मनि प्रतीयमानत्वात् गौरत्वादिवत् । इति । तथा, रूयादयः सुखादिगुणकाः सुखादिजनकत्वात् । यद्यज्जनकं तत्तद्गुणकम्, प्रकाशशैत्यादिजनकवह्निचन्दनादिवदिति च । एवं सिद्धे तेषां तद्गुणकत्वे तेषां द्रव्याणां तद्गुणात्मकत्वमप्यनुमेयम् । तथाच प्रयोगः—विमताः सुखाद्यात्मकाः, सुखाद्यविनाभूतत्वात् । तन्मात्राविनाभूतमहाभूतवत् । तथा, सुखादयो द्रव्यसूक्ष्मावस्थारूपाः, तदविनाभूतत्वे सति तज्जनकत्वात्, महाभूताविनाभूततज्जनकतन्मात्रवदिति । न चाद्यक्षणे द्रव्यं यावद्गुणशून्यमेवोत्पद्यते इति वाच्यम्, प्रत्यक्षबाधितत्वात् । अपाकजस्य रूपादेरुत्पत्तिदशायामप्यनुभवात् । एवं सुखादावपि बोद्धव्यम् । पुत्राद्युत्पत्तिकाल एव पुरुषभेदेन सुखाद्युत्पत्तिदर्शनात्, तस्य बालादेस्तदानीमपि तज्जनकतया तद्गुणकत्वत्तदविनाभावयोर्निश्चयादिति । एवं मैत्रायणीये "तमो वा इदमेकमेवाग्र आसीत् तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयाती"ति । श्वेताश्वतरेऽपि "प्रधानक्षेत्रज्ञपतिर्गुणेश इति तमःशब्दवाच्यायाः प्रकृतेर्गुणानां च सृष्ट्यादौ सत्ता श्रावणात् पुराणेषु मन्वादिषु तथा स्मरणात् सिद्धे प्रकृतेः सत्त्वे सर्वस्य त्रिगुणत्वेन गुणमय्याः प्रकृतेरेव समन्वयस्य सिद्धत्वान्न ब्रह्मणः समवायित्वसिद्धिः, इति चेत्? अत्रोच्यते—प्रकृतेरपि स्वमते तदंशत्वात् । "आसीज्ज्ञानमयो ह्यर्थ एकमेवाविकल्पितम् । यदा विवेका निपुणा आदौ कृतयुगे युगे । तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते" इत्याद्येकादशस्कन्धीयभगवद्वाक्यैस्तस्या अंशत्वे जन्यत्वे च निश्चिते तद्रूपस्याप्यागन्तुकत्वेन तदन्वयस्यापि समन्वयत्वाभावान्न तेन ब्रह्मणः समवायित्वभङ्ग इति ध्येयम् ।

ननु भवत्वेवं, तथापि तदन्वयस्य साङ्ख्यैः साधितत्वात् तेनैव रूपेण ब्रह्मान्वयोऽस्तु किमस्त्यादिरूपान्वयाग्रहेणेति चेत्, श्रूयताम्; प्राकृती या प्रीतिः साऽऽज्ञानिकी, नतु वास्तवी । तत्र गमकम् देशतः कालतश्च परिच्छेदः । यथा कस्यचित्किञ्चित्प्रियं किञ्चिन्न । तदपि कदाचित्प्रियं कदाचिन्न । तथा सति तस्या औपाधिकत्वम् । मैत्रेयीब्राह्मणे तथैव सिद्धत्वात् । वास्तवस्य नैसर्गिकतायां वस्तुसद्भावे ज्ञानेन तद्बाधायोगाच्च । अतो वास्तवं प्रियत्वमात्मन्येवेत्यात्मन एव दर्शनादिकमावश्यकमिति बाधयित्वा "इदं सर्वं यदयमात्मा" इत्यनेन सर्वस्यात्माभिन्नत्वं श्रावयति । तथा तैत्तिरीये—"आनन्दं ब्रह्मणो विद्वान्" इत्युपक्रम्य, "एतꣳ ह वा व न तपति किमहꣳ साधुनाकरवं किमहं पापमकरवमिति स य एवं विद्वानेते आत्मनः स्पृणुते" इत्यात्मत्वानुसन्धानेन तत्कृततापाभावे च श्रावयति । अत एवमा-

ननु नैतत्सारम् । सम्यगनुवृत्तत्वं नामारोपितागन्तुकत्वाभावेन पदार्थ-जातं लक्षीकृत्य वर्तमानत्वम् । यथा पटादौ तन्तोर्घटादौ मृदश्च समन्वयः । प्रपञ्चे ब्रह्मणस्तादृशः समन्वयो न सम्भवतीति चेत्, मैवम्; तत्तत्पदार्थेषु प्रेक्षकप्रत्ययविषयेणास्तित्वादिनाऽवगम्यमानत्वेन सदादिनाऽन्वयात् । यश्च येनान्वितस्तदीयामेव प्रतीतिं स्वस्मिन्नाधत्ते । यथाहि—घटः पृथिवीति । तथेहापि निखिलमस्तीत्यादिप्रतीतिजनकत्वात्सदाद्यन्वितमेव ।

---

"एकोऽहं बहुस्याम्" इत्यादिषु तस्यैच्छिकत्वश्रावणात् । ननु घटपटादिषु सच्चिदानन्दात्मकांशत्रितयस्यानुपलम्भात्कथं तत्समन्वय इति चेत्, न; जडजीवान्तर्यामिकैकांशप्राकट्यात् ।

ननु कारणत्वमेवास्तु ब्रह्मणः किं पुनः समवायिकारणत्वेन? तथा सति तस्य विकृतत्वं स्यात् । तच्च नेष्टम् । अत्रोच्यते—श्रीमदाचार्यपादैरविकृतपरिणामवादस्यैव स्वीकारात् न कश्चिदपि दोषः । नापि परिणामित्वेऽद्वैतसिद्धान्तभङ्गप्रसङ्ग इति वाच्यम् । हाटकस्य कटकत्वादिना भेदेप्यभिन्नत्वात् "कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा" इति भास्करोक्तेः ।

ननु परस्परविरुद्धयोर्भेदाभेदयोरेकत्रावस्थितिर्न सम्भवति–यथाहुर्वाचस्पतिमिश्राः—"कः पुनरयं भेदो नाम, यः सहाभेदेनैकत्र भवेत् । परस्पराभाव इति चेत्, किमयं कार्यकारणयोः कटकहाटकयोरस्ति न वा । न चेत्, एकत्वमेवास्ति न च भेदः । अस्ति चेद्भेद एव नाभेदः । न च भावाभावयोरविरोधः, सहावस्थानासम्भवात् । सम्भवे वा कटकवर्धमानकयोरपि तत्त्वेनाभेदप्रसङ्गः, भेदस्याभेदविरोधात् । अपि च कटकस्य हाटकादभेदे यथा हाटकात्मना कटकमुकुटकुण्डलादयो न भिद्यन्ते, एवं कटकात्मनाऽपि न भिद्येरन्; कटकस्य हाटकादभेदात् । तथाच हाटकमेव वस्तुसन्न कटकादयः; भेदस्याप्रतिभासनात् । अथ हाटकत्वेनैवाभेदो न कटकत्वेन, तेन तु भेद एव कुण्डलादेः । यदि हाटकादभिन्नः कटकः, कथमयं कुण्डलादिषु नानुवर्तते? नानुवर्तते चेत्कथं हाटकादभिन्नः कटकः? ये हि यस्मिन्ननुवर्तमाने व्यावर्तन्ते ते ततो भिन्ना एव, यथा सूत्रात्कुसुमभेदाः । नानुवर्त्तते चानुवर्तमानेऽपि हाटकत्वे कुण्डलादयः, तस्मात्तेऽपि हाटकाद्भिन्ना एवेति । सत्तानुवृत्त्या च सर्ववस्त्वनुगमे इदमिह नेदम्, इदमस्मान्नेदम् इदमिदानीं नेदम्, इदमेवं नेदमिति विभागो न स्यात् । कस्यचित्क्वचित्कदाचित्कथञ्चिद्विवेकहेतोरभावात् । अपिच दूरात्कनकमित्यवगते न तस्य कुण्डलादयो विशेषा जिज्ञास्येरन्; कनकादभेदात्तेषाम्, तस्य च ज्ञातत्वात् । अथ भेदेऽपि अस्ति कनकात्कुण्डलादीनामिति कनकावगमेऽप्यज्ञातास्ते । नन्वभेदोप्यस्तीति किं

भिद्यते, यथा करभे गृह्यमाणेऽगृह्यमाणो रासभः करमात्। गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलादयः, तस्मात्ते हेम्नो भिद्यन्ते। कथं तर्हि हेमकुण्डलमिति सामानाधिकरण्यम्? इति चेत्, नह्याधाराधेयभावे समानाश्रयत्वे वा सामानाधिरण्यमित्युक्तम्। अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम्? न खल्वभेद ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते इत्युक्तम्। तस्माद्भेदाभेदयोरन्यतरस्मिन्नवहेयेऽभेदोपादानैव भेदकल्पना, न भेदोपादानाऽभेदकल्पनेति युक्तम्। भिद्यमानतन्त्रत्वाद्भेदस्य, भिद्यमानानां च प्रत्येकमेकत्वात्, एकाभावे चानाश्रयस्य भेदस्यायोगात्, एकस्य च भेदानधीनत्वात्, नायमयमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वात्, एकत्वग्रहस्य चान्यानपेक्षत्वात्, अभेदोपादानैवानिर्वचनीयभेदकल्पनेति साम्प्रतम्। तथाच श्रुतिः—'मृत्तिकेत्येव सत्यम्' इति। तस्मात् कूटस्थनित्यतैव पारमार्थिकी न परिणामिनित्यतेति सिद्धम्" इति।

अत्रेदमवधेयम्—नायं परस्पराभावः। अवयवावयविनोरिवोपादानकारणस्य कार्यस्य च भेदाभावात्। अन्यथा घट इत्युक्ते मृदो पृथक् भानं स्यात्। 'मृदभिन्नोऽयं घटः' इति ज्ञानमेव तस्य मृदुपादानत्वं बोधयति, घटः पटो नेतिवत् परस्पराभावबुद्धिरुपादानत्वबोधासमर्पिकेति दिक्। अन्योन्याभावोऽपि तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकः। सचात्र न सम्भवति कार्यकारणयोस्तादात्म्यात्। नच "नचैकत्वमेवास्ति नच भेदः, अस्तिचेद्भेद एव नाभावः" इति वाच्यम् कार्याव्यवहितप्राक्क्षणे मृद्रूपेणावस्थानाद्भेदः, कार्यावस्थायामभेद इति भेदाभेदरहस्यस्य भवद्भिरज्ञातत्वात्। ननु "भावाभावयोर्नाविरोधः, सहावस्थानासम्भवात्" इति चेत्, न युक्तम्; मृद् घटो नास्ति, किन्तु घटस्तु मृदभिन्न एवेत्यपरोक्षं चक्षुष्मताम्। नच तथा सति कटकवर्धमानकयोरपि तत्त्वेनाभेदप्रसङ्ग इति वाच्यम्; तयोः कार्यकारणभावाभावात्। नच कार्याव्यवहितप्राक्क्षणे घटाभावस्य मृदि सत्त्वात् घटस्य च मृद्रूपत्वात् मृदभिन्नो घटाभावः कारणं घटं प्रति; तेन कार्यकारणयोरभेदस्वीकारे घटानुपलब्धिरेव स्यान्न घटोपलब्धिः। सत्यामपि तस्यां शुक्तौ रजताभासवदाभासरूपतैव ननु वास्तविकः कश्चिद्घटपदार्थः इति वाच्यम्, तथात्वे शङ्काकृतां भवतामेव प्रथमं तावच्छून्यवादप्रवेशः। अस्मन्मते तु न कश्चिद्विरोधः, अभावानां तिरोभावेन्तर्भावात्। इदं च पण्डितपुरन्दरैः श्रीमत्पुरुषोत्तमैराविर्भावतिरोभाववादे निपुणं प्रपञ्चितमिति नेह तन्यते। प्रेक्षावद्भिस्ततोऽवधेयम्। वस्तुतः सत्यपि तत्त्वेनाभेदे न सिद्धान्तभङ्गप्रसङ्गः शुद्धाद्वैतब्रह्मज्ञाने सर्वस्यापि ब्रह्मरूपत्वात्। "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्युपक्रम्य एकविज्ञानेन सर्व-

स्परविरोधेऽपि भावाभावनिषेधयोः । समुच्चयस्य दृष्टत्वादिष्टोऽत्रापि तथा न किम्" इत्युक्तमेव तत्कृतसर्वसङ्ग्रहे । अथ कोऽयमन्योन्याभावः ? (१) अनादिरनन्तोऽभावः, (२) प्रतियोगिनिष्ठो यथोक्तोऽभावः, (३) तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः, (४) अन्योन्यप्रतियोगिकः अभावो वा ? (१) नाद्यः, अत्यन्ताभावेन निर्वाहात् । नच प्रतियोगिनिष्ठतदनिष्ठत्वाभ्यां तयोः वैधर्म्यसिद्धिः । प्रतियोगिनिष्ठत्वस्य भावत्वे अत्यन्ताभावनिष्ठत्वाश्रयणात्; अभावनिष्ठत्वेऽपि न अभावनिष्ठत्वं सिद्ध्यति । प्रतियोग्यनिष्ठत्वमपि तन्निष्ठात्यन्ताभावात्, अन्यत्वं चेत् अन्योन्याभावस्याभिमतं, कथं तर्हि प्रतियोगिनिष्ठात्यन्ताभावान्योन्याभाववत्त्वेनान्योन्याभावोक्तौ घटाश्रयत्वम् । प्रतियोग्यनिष्ठत्वं नाम प्रतियोगिनिष्ठात्यन्ताभाववत्त्वम्, इति चेत्, मैवं; तस्यैवाद्याप्यसिद्धत्वात् । (२) न द्वितीयः, प्रतियोगिनिष्ठत्वस्याभावे प्रयुक्तत्वात्, अनाद्यनन्तत्वेऽभावत्वानुपपत्तेः अदर्शितत्वात् । अत्यन्ताभावश्च निःस्वभावश्चेत्, न; सप्रतियोगित्वं शशविषाणादिवद्युक्तम् । स स्वभावश्चेत्, न प्रागभावादिवैधर्म्यम् । अनाद्यनन्तत्वं ततो वैधर्म्यं, इति चेत्, न; तन्मतस्य बहुशः खण्डितत्वात् । (३) नापि तृतीयः, तथात्वे तादात्म्यं प्रमितं न वा ? प्रमितं चेत्, न प्रतिषेद्धुं शक्यं प्रमितिविरोधात् । नच घटपटयोस्तादात्म्यं प्रमितं—अन्यत्र प्रतिषेध्यम्, अप्राप्तेः अन्यत्र प्रतिषेधायोगात् । घटपटयोश्च तादात्म्यस्य प्रमितत्वादेवाप्रतिषेधे न तयोः साङ्कर्यं वार्येत; तथा चोदकाहरणार्थी पटमपि घटमिवाददीत, शीतापनयनार्थी च घटमपि पटमिवोपाददीत । एवं तत्र प्रमितस्य तादात्म्यस्य प्रमितिविरोधादेवाप्रतिषेधे प्रवृत्तिसाङ्कर्यं दुर्वारमापद्येत । यदि पुनरन्योन्याभावप्रतियोगिभूतं तादात्म्यं प्रतिहीयते तर्हि प्राप्त्यभावान्न तत्प्रतिषेधो युज्येत । अप्राप्तप्रतिषेधे च निवारकाभावान्निरङ्कुशो निषेधः स्यात् । घटपटयोस्तादात्म्यं भ्रान्तिप्राप्तं—अयं—अयं न भवति—इति निषेध्यमिति चेत्, न भ्रान्तिपूर्वकत्वात् घटपटतादात्म्यस्य क्वापि प्रामाणिकत्वप्रसङ्गात् । एतेन तुरीयमपि—अन्योन्यप्रतियोगिकोऽभावोऽन्योन्याभावः—इति प्रत्यूढं, अन्योन्यशब्दस्य अतादात्म्यविषये प्रागुक्तदोषानतिक्रमणात्, घटपटविषयत्वे च तत्स्वस्वनिषेधस्यासिद्धत्वात्, घटे पटत्वं पटे च घटत्वं—घटः पटोनेति निषेध्यं—इति चेत्, न; घटे पटत्वस्य पटे च घटत्वस्य प्रसङ्गाभावादेव प्रतिषेधायोगात् । नहि घटादौ पटत्वादिप्रसक्तमस्ति; तन्निषेधे च तादात्म्यनिषेधातिरिक्तसंसर्गनिषेधाभ्युपगमः स्यात् । तथा च सर्वस्य संसर्गनिषेधत्वादवान्तरविभागकथा वृथा प्रसज्येतेतिदिक् । अत एव पण्डितपुरन्दराः श्रीपुरुषोत्तमचरणाः "तत्तु समन्वयात्" इत्यधिकरणस्थभाष्यप्रकाशे "भेदाभेदयोर्नानात्वैकत्वरूपतया भेदस्यान्योन्याभावरूप-

कतानियामकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकात्यन्ताभावरूपत्वेचात्यन्ताभाव एव । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपत्वे तु अतिरिक्तः । तत्रातिरिक्तपक्षे घटः पटो नेत्यादिप्रत्ययस्य तादात्म्यसम्बन्धारोपपूर्वकतदभावावगाहितया प्रतियोगितिरोभावसङ्कीर्णानुयोगिस्वरूपविषयत्वात्स्वरूप एव निविशते । यदि च तत्र घटप्रतियोगिकान्योन्याभाववान् पट इति बोध आपद्यते तदा पृथक्त्व एव निविशते । तच्चाविर्भावविशेष एव तस्यैवेतरव्यावर्तकत्वादितरव्यावृत्तत्त्वाच्च । अयमस्माद्भिन्नः अन्यः पृथगित्यादिव्यवहारसाधकत्वेन तस्याविर्भावातिरेके मानाभावात् । घटः पटोनेत्यत्र पञ्चम्यभावस्त्वनुशासनाभावात्स्वरूपात्मकत्वाद्वेति न तेनाप्यतिरेकसिद्धिः । नचेतरतिरोभाव घटाद्याविर्भाव इति वाच्यम्, तस्य व्याप्यवृत्तित्वे घटाप्रतीतिप्रसङ्गात्, अव्याप्यवृत्तित्वे तस्यापि तिरोभावान्तरं कल्पनीयमिति कल्पनातौल्यात् । अतो भावमुखप्रतीतेः "आविर्भावतिरोभावौ शक्तीवैमुरवैरिणः" इतिवाक्याच्चाविर्भावाभ्युपगमस्यावश्यकत्वान्नागतामैक्ये कांस्यवदविवक्तौ विवक्षितवस्त्वाविर्भावतदितरतिरोभावावेव पृथक्त्वं, तस्य भावप्रतीत्याऽऽधिक्याच्चाविर्भावविशेषत्वं, तेन पृथक्त्वग्राहकसामग्र्यैव तद्ग्रहः" इति । एवंच परस्पराभावासिद्धौ व्यर्थं एवायं प्रयासः पूर्वपक्षकृताम् । तथापि तुष्यतु दुर्जन इति न्यायेन घटतदत्यन्ताभावयोर्घटतद्भेदयोश्च भूतले सहावस्थानं दृश्यते तेन भेदस्य तदभावेनाभेदेन सह न विरोधः । अत्यन्ताभावस्य नित्यव्यापकत्वेन सर्वत्र सत्वात् प्रतियोग्यानयनोत्तरं तदभावबुद्धिप्रतिबन्धमात्रपरम् । एवं सति यत्र भेदस्तत्राप्यभेदो वर्तत एवेति तयोः सहासम्भवाद्विरोधकथनस्यापि तथात्वम् । एवं सम्भवे वेत्यादिना कटकवर्धमानकयोरभेदप्रसङ्गस्यापि तथात्वम् । अविरोधस्यैक्यापादकतायाः क्वाप्यदृष्टत्वात् । यदपि कटकस्य हाटकादित्यादिना कटकादीनां हाटकाद्भेदव्युत्पादनं तदपि तथा । तेषां तदवस्थारूपत्वात् । अवस्थानां चावस्थावतः सकाशाद्भिन्नाभिन्नत्वात् । षट्पद्यां श्रीमच्छङ्कराचार्या अपि "सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः" इत्यनेन समुद्रतरङ्गयोस्तथात्वमाहुः । अथ "हाटकादभिन्नः कटकः कथमयं कुण्डलादिषु नानुवर्तते" इत्यत्र विद्यमानेपि कुण्डलादिना भेदे हाटकत्वेनाभेदस्तु प्रतीयते तदा न प्रतीतिविरोधः, प्रमाणत्वेनाधिगमात् । प्रमिते च तस्मिन् दूरात्कनकमित्यादिनोक्तानां विकल्पानामनवसरपराहतत्वातदिति, "प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते । विरोधे चाविरोधे प्रमाणं कारणं मतम् । एकरूपं प्रतीतत्वात् द्विरूपं तत्तथेष्यताम् । एकरूपं भवेदेकमिति नेश्वरभाषितम्" इत्यादिना भास्करैरप्युक्तम्, व्युत्पादितं च । अपि च कार्यकारणयोः समानजातीयत्वनियमः न तु समानधर्मत्वनियमः ।

---

जनकत्वयोरुपपत्तेर्भेदस्यागन्तुकत्वमेव नत्वनिर्वचनीयत्वम्। नच श्रुतिविरोधः। उक्तश्रुतौ परिणामिनो मृदादीनेव दृष्टान्तीकृत्य "एवꣳसौम्य स आदेशो भवति" इति दार्ष्टान्तिकेऽतिदेशेन परिणामिनित्यताया एव श्रुत्यभिप्रेतत्वात्। न चात्र कारणे सत्यत्वस्य कार्ये वाचारम्भत्वस्यचोक्तत्वेन कार्यमिथ्यात्वसिद्धौ कूटस्थनित्यत्वमेव सेत्स्यतीति वाच्यम्। घटः पट इत्यादिवाचारम्भणरूपस्य श्रुत्यनभिप्रेतत्वात्। यदि कार्यरूपस्यापि वाङ्मात्रतामभिप्रेयाद्, वाचारम्भणं नामधेयमिति पदद्वयं न ब्रूयात्; एकेनैव चारितार्थ्यात्। तदेतत्सर्वं "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र सम्यग्विचारितम्। विशेषजिज्ञासुभिस्ततोऽवगन्तव्यम्।

(१) तत्र तावच्छङ्कराचार्याः—तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। पूर्वपक्षस्तु–आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति सूत्रप्रतिपादितः सकलस्य वेदस्य क्रियापरत्वमेवेत्येवंरूपः। तत्=ब्रह्मणः शास्त्रप्रमाणकत्वम्, समन्वयात्=सर्वेषु वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि तस्मादित्याहुः।

(२) रामानुजा अपि–प्रसक्ताशङ्कानिवृत्त्यर्थं तु शब्दः। आशङ्का च सिद्धरूपं ब्रह्म शास्त्रं न प्रतिपादति प्रवृत्तिनिवृत्तिपरत्वाभावादित्येवंरूपा। तत्=ब्रह्मणः शास्त्रप्रमाणकत्वं सम्भवत्येव। कुतः, समन्वयात्=परमपुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयान्वयात्।

(३) भास्करास्तु—तु शब्दः पूर्वपक्षं व्यावर्तयति। ब्रह्मस्वरूपं शास्त्रमवबोधयति न केवलं कार्यमेव। कुतः, समन्वयात्। समन्वितानि हि ब्रह्मस्वरूपप्रतिपादनपरत्वेन सृष्टिप्रकरणगतानि वाक्यानि।

(४) निम्बार्काचार्याः—तज्जिज्ञास्यं विश्वकारणं शास्त्रप्रमाणकं ब्रह्मैव, न कर्मादि। तत्रैव प्रतिपादकतया कृत्स्नस्यापि वेदस्य समन्वयान्मुख्यवृत्त्याऽन्वय इत्याहुः।

(५) मध्वाचार्याः—अन्वय उपपत्त्यादिलिङ्गम्, उक्तञ्च बृहत्संहितायाम्–"उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति। उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यम्, "मां विधत्तेऽभिधत्ते मां विकल्पापोह्यते ह्यहम्। इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन" इति भागवत इत्याहुः।

(६) भैक्षवस्तु—तत् पदं व्यवहितपरामर्शार्थम्, तु शब्दः पूर्वपक्षप्रतिषेधार्थः। तद्ब्रह्मणो जगज्जन्मादिकारणत्वं तु समन्वयात्, अस्य जगतः कारणरूपे ब्रह्मणि समनुगतत्वात्, ब्रह्मणश्च कारणरूपेण जगति समनुगतत्वादुपपद्यत इति शेषः इत्याहुः।

(७) शैवाः—तच्छब्देन प्रकृतं ब्रह्म परामृश्यते। तु शब्देन सर्वाणि वेदान्तवाक्यानि समाह्रियन्ते। समन्वयपदं सम्बन्धतात्पर्यकम्। तद्ब्रह्म वेदान्तवाक्यानि तात्पर्यलिङ्गसम्बन्धा-

**स्यादेतत् । समवायित्वं ब्रह्मण अस्त्यादिसमन्वयेनैव साध्यते तन्नैकान्तिकं सिद्ध्यति रूपनाम्नोरपि समन्वयस्य दृष्टत्वात् । तयोः प्रतिव्यक्तिगत्वेन नानात्वान्नान्वय इत्यपि न वाच्यम् । नियतरूपेणान्वयेऽपि तयोरवच्छेदावच्छेदेनान्वयस्यानुभवविषयत्वात् । न हि स्वरूपव्यभिचारापत्तिः, व्यवहार्यत्वपरकत्वात् । आकाशेऽप्यवकाशरूपेण तत्त्वस्य वर्तमानत्वादिति चेत्, न; तयोः कार्यरूपत्वात् । श्रुतौ "त्रयं वा इदं नाम स्वरूपं कर्म" इत्यत्र जगतस्त्रयात्मकत्वेनोपदिष्टत्वात् । युज्यते चैतत्, कार्यताव्यञ्जकत्वं तयोरेव कार्यस्य "अनेन**

---

ये च समन्वयशब्दस्यार्थः सम्बन्धत्वेन व्याख्याय तुशब्देन वेदान्तवाक्यान्तमपि क्रियापरत्वमिति पूर्वपक्षं निवारयन्ति तन्न रुचिरम् । "शास्त्रयोनित्वात्" इत्यनेनैव तन्निरासात् । शास्त्रे योनिः शास्त्रयोनिः तस्य भावस्तस्मात् इत्यर्थस्वीकारे शास्त्रोक्तकारणत्वं तु सिद्धमेव । शास्त्रोक्तकारणत्वेनैव "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति जैमिनीयतन्त्रोक्तसर्वस्यापि वेदस्य क्रियापरत्वं तु व्यासैर्निराकृतमेव, न पुनः पूर्वपक्षावकाशोऽवशिष्यते । शास्त्रं योनिर्यस्येति विग्रहे शास्त्रस्य ब्रह्मकारणत्वापत्तिः । नहि शास्त्रं ब्रह्मणः कारणम् । किन्तु तच्च ब्रह्मणः कार्यमेव, निःश्वासरूपत्वात् । किञ्चैवमर्थस्वीकारेऽरुच्याऽपि निमित्तकारणत्वमेवायाति न पुनः समवायिकारणत्वम् । प्रकृते तु जगज्जन्मादेरभिन्ननिमित्तोपादानं कारणं ब्रह्मैवेति प्रतिपाद्यो विषयः । न केवलं निमित्तत्वम् । अतः सुधीभिर्विचारणीयं कतरः समासः साधुतामाप्नोतीति । पूर्वाचार्यैः सुविस्तृतोऽयं विषयो विवेचित इति नेह तन्यते ।

पूर्वपक्षमाहुः—**रूपे**त्यादिना । **तयो** रूपनाम्नोः । **कार्यरूपत्वादि**ति । "नामरूपे व्याकरवाणि" इति श्रुतेः । **जगतस्त्रयात्मकत्वेने**ति । त्रयं वेति श्रुतिर्बृहदारण्यके प्रथमाध्याये षष्ठब्राह्मणे दृश्यते । इदं पुरोदृश्यमानं जगत् त्रयं वै त्र्यात्मकमेव । किं तत्त्रयमित्याह–नाम रूपं कर्मेति । तत्र प्रमाणमाह–"तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति । एतदेषां सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति । अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्ये तदेषां सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मै तद्धि सर्वाणि रूपाणि बिभर्ति । अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति । तदेतत्त्रयं सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयं तदेतद-

जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुत्या जगतः कार्यदृष्टिगोचरत्वस्य रूपेषु नाम्नां नियतिकृतावेव व्यक्तत्वात् । यदा हि पृथुबुध्नोदराकारो भवति, तदा तत्र तादृशं रूपं घट इति भवति, तदापि न स्वतः किन्तु व्याकरणश्रुतेस्तत्कारणोत्तरमेव । यथाहि बालके जाते तदवयवानालोक्य निश्चितव्यक्तौ नामनियमनं भवति तद्वत् । अतो मूलवस्तूत्तरकालीनस्य कर्मणोऽपि कार्यत्व एव प्रवेश इत्यागन्तुकत्वान्न तत्समन्वयः । किन्तु त्रयाणामन्वयमात्रत्वेन सर्वत्र ब्रह्मणश्च सम्यगन्वयान्न तत्समवायित्वबाधकं किञ्चित्पश्यामः ।

नन्वेतदप्यापातरम्यमेव । अस्तित्वस्य स्वप्नदृष्टविषयेऽप्युपलम्भात्तत्रापि सदन्वयेन स्वाप्निकपदार्थानामपि ब्रह्मकर्तृकत्वसिद्धौ जगत्साम्येन स्वप्नस्यापि सत्यत्वापातः । स च विशेषदर्शनपराहतत्वेन न वक्तुं शक्यः । अतो न ब्रह्मकर्तृकत्वं तस्य । एवं ब्रह्मकार्यभिन्नेऽपि सदन्वयसत्त्वेन सदन्वयान्न ब्रह्मणः समवायित्वमिति सिद्धान्त इति चेत्, अत्रैतज्ज्ञेयम्—नह्यन्वयमात्रत्वस्य समवायित्वं वयं ब्रूमः, किन्तु समन्वयस्यैव । स त्वागन्तुकत्वारोपितत्वाभावेन सदाद्यन्वय एव । मिथ्याप्रतीत्यङ्गीकारे तु, सत्ताप्यारोपितैव । तदन्वयस्याप्यारोपितत्वेन न तस्य ब्रह्मकार्यत्वबोधक्षमत्वम् । तत्र सम्यगन्वयाभावस्यापि प्रकटत्वेन ब्रह्मणः समवायित्वेऽप्यविरोध एव । अतो नामरूपकर्मणः सुखदुःखमोहानां चागन्तुकत्वेन परमाण्वादीनामसाधारणत्वात्कालादीनां तथात्वे विप्रतिपन्नतयालौकिकिकालीकप्रतीतौ सत्त्वस्यारोपितत्वेन तेषामन्वयस्यासम्यक्तया प्रकटानां वास्तविकानां सच्चिदानन्दानामेव समन्वयाद्ब्रह्मण एव समवायित्वं नान्यस्येति वेदान्तसिद्धान्तः ।

---

मात्मा" इत्यंशेन स्फुटीभवति । स चात्मा 'उ' निश्चयेन "एकः" कार्यकारणयोरैक्यात् । "एकः सन्" एकोऽप्येतत्त्रयं भवति । तदेतमृतं सत्येन छन्नं सम्वृतम् । तच्चामृतं प्राण आसन्यः । सत्यं च नामरूपे । नामरूपाभ्यामयं कर्मोपादानकारणरूपः प्राणः ( आसन्यः ) छन्नः सम्वृतः । अनेन जगतस्त्रयात्मकत्वं त्रयाणां च ब्रह्मणः कार्यरूपत्वम् । नचात्र सच्च त्यच्च

एवं त्रिसूत्र्या ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वं सुनिरूप्य मायाप्रकृत्यादेर्जडस्यैव तद्भवतु नतु चैतन्यस्येति शङ्कानिवारणाय "ईक्षतेर्नाशब्दम्" इति सूत्रेणेक्षणपदवाच्यविचारविशिष्टस्य चैतन्यस्यैव कर्तृत्वं नान्यस्येति निरूपयति। न हीक्षणादयो धर्मा मायादौ सम्भवति जडत्वात्। नन्विदमत्र विचार्यम्, वेदे हि ब्रह्मणः कर्तृत्वमकर्तृत्वं चोभयमप्युच्यते, तत्र, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्ति" "स आत्मानꣳ स्वयमकुरुत" इत्यादि श्रुतयः कर्तृत्वं निगमयन्ति। तत्र यतो वेत्यादिषु निमित्तत्वं, स आत्मानमित्यादिषूपादानत्वम्, "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "असङ्गो ह्ययं पुरुषः" इत्यादिष्वकर्तृत्वं च। तत्र कर्तृत्वविरुद्धं निष्क्रियत्वं शान्तत्वं च, उपादानत्वविरुद्धं निष्कलत्वं निरवद्यत्वं च, असङ्गो ह्ययमित्यत्र संसर्गस्यासक्तेश्च निरासो बोध्यते। तेन ब्रह्मणि क्रियाभावो विकारित्वाभावश्च स्फुटीभवति। एवमत्र परस्परविरुद्धप्रमाणसम्प्रतिपत्तावुभयथा समाधेयम्। तत्र ब्रह्मणः सर्वभवनसमर्थत्वाद्विरुद्धसर्वधर्माणामाश्रयत्वात्कर्तृत्वादिकं सर्वमपि सम्भवतीत्येकः प्रकारः। द्वितीयस्तु—अन्यतरबाधात्। तत्राक्रियत्वाद्यलौकिकापेक्षया कर्तृत्वादीनां लौकिकानां हीनत्वात्तद्बाधेनेति। ईक्षत्यादिकं तु प्रकृतिसम्बन्धादपि सम्भविष्यति। अतोऽलौकिककर्तृत्वसर्वभवनसमर्थत्वादिकल्पनापेक्षया लौकिकस्य कर्तृत्वस्यैव बाधः कर्तव्यः। एवं च कृते परब्रह्मणः सत्यस्वरूपाद्भिन्नमेव कर्तृत्वादिविशिष्टं गौणं मायाशबलं ब्रह्म सेत्स्यतीति चेत्;

अत्र ब्रूमः। ब्रह्मणः सत्यस्वरूपाद्भिन्नमेव कर्तृत्वादिविशिष्टं गौणं मायाशबलं ब्रह्मेति शङ्कापिशाचीनिवृत्तये व्यासोऽग्रिमं सूत्रं सूत्रितवान् "गौणश्चेन्नात्मशब्दादिति" वेदे हि "आत्मा वा इदमेक एवाग्र आसीत्" इत्युपक्रमा-

---

ब्रह्मण एवाभिन्ननिमित्तोपादानत्वं साधयन्ति—एवं त्रिसूत्र्येत्यारभ्य **वेदसम्मतो मार्ग** इत्यन्तेन। **ईक्षतेर्नाशब्दमिति**। ब्रह्मणो वेदान्ताद्यात्मकशब्दप्रतिपाद्यत्वेऽपि ईक्षतिधातुनिर्देशाद्ब्रह्मैवाभिन्ननिमित्तोपादानम्। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्युपक्रम्य "तदैक्षत बहु स्यां प्रजायेय" इति, "तत्तेजोऽसृजत", "आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत् स ऐक्षत लोकान्नु सृजै" स "ईक्षाञ्चक्रे" "स प्राणमसृत" इत्येवमादिषु मन्त्रवाक्येषु ब्रह्मण ईक्षा प्रतीयते। न चात्र ब्रह्मणो गौणत्वं द्योत्यते प्रकृतिगुणस-

नन्तरं "स ऐक्षत" इति पठ्यते। अत्राऽऽत्मशब्दस्य वेदान्ते निर्गुणब्रह्मवाच्यत्वेनैव प्रसिद्धत्वात्तस्यैव कर्तृत्वादिकं श्रुतिर्वदति। सगुणस्य शबलस्य वा तथात्वाङ्गीकारे तस्य प्राकृतगुणानधीनत्वस्य मायानधीनत्वस्य चाभावात्स्वातन्त्र्यरहितत्वेन कर्तृत्वासम्भवात्। कर्तुश्च सर्वत्र स्वतन्त्रत्वेनैवोपदिष्टत्वेन तद्विरोधाच्च। स्वातन्त्र्यस्य कारकमात्रव्यापारं प्रति स्वीकारेऽपि यत्कर्तृलक्षणतया स्वातन्त्र्यस्य कीर्तनं तत्कारकान्तरनियामकतयैव। अतो गुणानां मायाया वोपादानत्वे वा कारणत्वे वाऽवश्यं कर्तृनियम्यतैव युक्ता, न तु प्रयोजकता। तथा सति तेषामेव तस्या वा सृष्ट्यादिकार्ये स्वातन्त्र्येण ब्रह्मनियामकतया सगुणस्य शबलस्य वा स्वातन्त्र्याभावेन कर्तृत्वस्यासिद्धेः। अत एव वेदे, आत्मशब्दप्रयोगेण निर्गुणब्रह्मण एव कर्तृत्वं साध्यते नान्यस्येति न विप्रतिपत्तिः काचित्।

नन्वेवमात्मशब्दसाधितं निर्गुणस्य ब्रह्मणः कर्तृत्वमप्यापातरमणीयमेव। कथम्? इत्थम्, ममायमात्मा देवदत्त इत्युपचाराद्यथा लोके कथ्यते; एवं "आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतावपि गौणे कर्तृत्वादिविशिष्टे ब्रह्मण्युपचारप्रयुक्तात्मशब्दप्रयोगस्य सम्भाव्यत्वादिति चेत्; अत्रेदमवधेयम्, न ह्यत्रात्मशब्दो गौणे सम्भवितुमर्हति, वैयासन्यायविरोधात्। तथा च सूत्रम्—"तन्निष्ठस्य मोक्षोपदेशात्" इति। अत्र पूर्वोक्तात्मशब्दवाच्ये जगत्कर्तृत्वादिगुणगणालङ्कृते ब्रह्मणि निष्ठावतो मोक्षप्राप्तिर्व्यक्तमुच्यते। तदेव च "असद्वा इदमग्र आसीत्" "ततो वै सदजायत" "तदात्मानꣳ स्वयमकुरुत" इत्युपक्रम्य "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति" इत्यादिश्रुतिभिर्दृढीक्रियते। बादरायणोऽपि "हेयत्वावचनाच्च" इति तृतीयं हेतुमुपदिश्य कर्तृत्वादिविशिष्टब्रह्मणः शबलत्वं गौणत्वं वा यदि वेदाभिप्रेतं स्यात्तदा जीवानां नैर्गुण्यसम्प्रतिपत्तये मायानिवृत्तये मोक्षलाभाय च तस्योपास्यत्वं न वदेद्भगवान्निगमः। यदि चानुपास्यत्वं तस्याभिप्रेतं भवेत्तदा पुत्रादिसर्वप्राकृतपदार्थानां मोक्षमार्गनिष्ठजीवविषये यथा हेयत्वं निरूप्यते तथा तस्यापि तथात्वमेवोपदिशेत्। उपास्यत्वेनोपदिष्टत्वाद्धेयत्वावचनाच्च कर्तृत्वादिविशिष्ट एवोपास्य इति प्रतिपाद्य तदेव

ब्रह्मा नारायणः। शिवश्च नारायणः। रुद्रश्च नारायणः। प्रजापतिश्च नारायणः। शक्रश्च नारायणः। कालश्च नारायणः।

प्रकृतमनुसरामः—एवं कर्तृत्वादिविशिष्टस्य नारायणस्य नित्यत्वं समाख्याय तदंशत्वात्सर्वेषां तद्विभूतिरूपत्वं तद्रूपत्वेन नित्यत्वं ब्रह्मा नारायण इत्यारभ्य शक्रश्च नारायण इत्यन्तेन ब्रह्मशिवरुद्रप्रजापतीन्द्राणां तथात्वमुपदिश्य कालस्य तद्रूपत्वं निगमयति—कालश्च नारायण इति। कालो हि भगवच्चेष्टारूपः "योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम्" "प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि। चेष्टा यतः स भगवान् काल इत्युपलक्षितः।" "प्रकृतिर्यस्योपादानमाधारः पुरुषः परः। सतोऽभिव्यञ्जकः कालो ब्रह्मतत्रितयं त्वहम्" "कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इत्यादिशास्त्रवचोभिर्भगवतश्चेष्टारूपत्वेन प्रतिपादनात्कालाख्यमेकं चेष्टारूपं भगवतः स्वरूपमेव। ननु, नैतच्छोभनम्, "आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतावात्म-

---

ब्रह्मरुद्रादीनां तदंशत्वं तदभिन्नत्वं च प्रतिपादयन्ति—**तदंशत्वादिति**।

कालस्यापि नारायणाभिन्नत्वं प्रतिपादयन्त आहुः—**कालस्येति**। तल्लक्षणमाहुः—**कालो हीति**। तत्र प्रमाणमाहुः—**योऽयमिति**। चेष्टतेऽतीतानागतवर्तमानतया।

**प्रकृतेरिति**। गुणानां साम्यं प्रकृतिः, प्रकृतेर्गुणानां सत्त्वादीनां गुणक्षोभात्पूर्वं निर्विशेषस्य साम्यस्य या चेष्टा स कालः। कालादेव गुणक्षोभात्। स कालो भगवानेव। कालस्य भगवदभिन्नत्वं कुतः? इत्यत आह भगवान् कपिलः **उपलक्षित** इति। कलयत्याकलयति येन सर्वोऽपि प्राणी येन रूपेणेति भावः। अतः भगवानेव कालः। नहि काल इति साक्षात् भगवन्नाम, किन्तु प्राणिनां बोधनरूपत्वादेव। अत्र प्रमाणमाहुः—**प्रकृतिरिति**। एकादशे चतुर्विंशाध्याये प्रकृत्याधेयकपुरुषाधारकः सतः प्रमेयस्याभिव्यञ्जकः काल इत्यर्थः। अत्र कालस्य ब्रह्मपदेनाक्षररूपतोक्ता। "वाङ्मनोगोचरं सत्यं द्विधा समभवद्बृहत्" इत्युपक्रमात्। न तु तदुत्पत्तिः। प्रकृतेरुपादानत्वमुक्त्वा सदभिव्यञ्जकमात्रमुक्तम्, तेन निमित्तरूपतया कारणत्वम्। यथा सोऽभिव्यनक्ति पदार्थान् तथा स एव संहरति चेत्याहुः—**कालोऽस्मीति**। "अन्तःपुरुषरूपेण कालरूपेण यो बहिः। समन्वेत्येष सत्त्वेन भगवानात्ममायया" तथा "वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः। प्रयच्छतो मृत्यु-

पदेन ब्रह्मणः, अग्रपदेन च कालस्यैवमुभयोर्भिन्नपदाभ्यां वर्तमानत्वस्य निर्दिष्टत्वात्कालस्य नारायणस्वरूपत्वमसम्भवदुक्तिकम् । नचात्रैवकारोऽन्ययोगव्यवच्छेदक इति वाच्यम्, श्रुतावग्रपदेनैव कालप्राप्त्या तस्यान्ययोगव्यवच्छेदकत्वाभावात् । एवं सृष्टेः पूर्वमेकपदार्थाङ्गीकारे ततस्तस्यैव सर्वरूपभवनत्वाङ्गीकारे चाग्रपदविरोधः । ब्रह्मकालयोरुभयोरङ्गीकारे शुद्धाद्वैतभङ्गप्रसङ्गश्चेत्युभयतः पाशारज्जुरिति चेत्, अत्रेदं तत्त्वम्, श्रुतिरियं कालादिसर्वसृष्ट्यपेक्षया पूर्वमुदन्तं निरूपयति, तत्रैवकारेण ब्रह्मव्यतिरिक्तसर्वव्यवच्छेदे भिन्नविधप्रमाणस्यापि व्यवच्छिन्नत्वेन तस्याप्यभावादग्रपदे प्रमाणान्तरसिद्धकालानुवादकतया वक्तुमशक्यत्वेनैतस्यैव वाक्यस्य कालसत्ताबोधकत्वे चात्मासीत्कालोप्यासीदित्येवं वाक्यभेदप्रसङ्गेन कालसत्ताया अशक्यवचनत्वे केवलस्यात्मनोऽपि निरूपणमशक्यमिति वाक्यस्याबोधकत्वे प्रसक्ते सृष्ट्युत्तरव्यवहारानुसारेण सर्वाधारतया प्रतीयमानो यः कालस्तदुपरञ्जनेन पूर्वं वृत्तान्तं निरूपयतीति ज्ञापनायैवाग्रपदोपादानमिति सर्वं चतुरस्रम् ।

स त्रिविधः । आधिभौतिकादिभेदात् । तत्र सूर्यादीनां भौतिकत्वम्, परमाण्वादिद्विपरार्धान्तस्याध्यात्मिकत्वम् । भगवतश्चाधिदैविकत्वमिति ।

अत्र प्रस्थानरत्नाकरे पण्डितपुरन्दराः श्रीमत्पुरुषोत्तमचरणाः—तत्र, अन्तःसच्चिदानन्दो व्यवहारे ईषत्सत्त्वांशेन प्रकटः काल इति कालस्य स्वरूपलक्षणम्, अतीन्द्रियत्वेन कार्यानुमेयत्वेन चेषत्सत्त्वांशेन प्रकटत्वमाकाशादेरप्यस्तीति तद्वारणाय, अन्तःसच्चिदानन्द इति । अक्षरवारणाय द्वितीयम् । इदं च "कालोऽस्मि लोकक्षयकृत्" "कालेनाव्यक्तमूर्तिना" इतिवाक्यानुरोधि नित्यगत्वे सति सकलाश्रयः सकलोद्भवो वा काल इति कार्यानुसारिलक्षणम् । तत्राद्येऽक्षरवारणाय द्वितीय ईश्वरेच्छादिवारणाय सत्यन्तम्, प्राणादिवारणाय द्वितीयम्, श्रुतावनस्तमितत्वबोधनेन तस्यापि नित्यगत्वात् । एतेनैव चिरक्षिप्रादिव्यवहारस्यातीतानागतादिव्यवहारस्य चोपपत्तिः । "गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः । पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत्" इति वाक्यानुसारि चेदं लक्षणम् । एतस्य प्रथमकार्यं गुणक्षोभः । "कालाद्गुणव्यतिकरः" इति

---

पूर्वपक्षमुपक्षिपन्ति—नन्विति । समादधति—अत्रेदं तत्त्वमिति । तस्य त्रैविध्यं

वाक्यात् । एतस्य सूर्यादय आधिभौतिकं रूपम्, परमाण्वादिद्विपरार्धान्त-माध्यात्मिकम्, आधिदैविकं "कालोऽस्मि" इतिवाक्याद्भगवानेव तत्र यावता कालेन सूर्यरथचक्रं परमाणुमात्रं देशं व्याप्नोति स कालः परमाणुः, चतुर्मुखायुर्द्विपरार्धम् । परमाणुस्तु सदा संयोगावस्थां चाप्राप्तोऽतिसूक्ष्मः सदवयवः, तदुक्तम्—"चरमः सद्विशेषाणामनेकोऽसंयुतः सदा । परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः" इति । अतिसूक्ष्म इति विभाजकाघातासहिष्णुः । संयोगावस्थामप्राप्त इति यत्रैकस्तिष्ठति तत्र बहवः पृथग्भूतास्तिष्ठन्ति "अणोरणीयान्" इत्यादिश्रुत्या भगवतोऽप्यतिसूक्ष्मत्वमुपपद्यत इति; तद्वारणाय संयोगेत्यादि । ततः कार्योत्पत्तिवारणाय कार्येत्यादि । कदाचित्संयोगे तस्यां दशायां परमसूक्ष्मतानिवृत्तौ लक्ष्याभावादेव लक्षणस्यागमनेऽसम्भवः स्यादिति तद्वारणाय सदेति ।

सिद्धान्ते तु—स्थूलादेव प्रकृत्यादेः सकाशात्कार्यस्य महदादेरुत्पत्तिः कारणत्वन्तु "जन्यभावत्वावच्छिन्नं प्रति कार्ययोग्यावयवस्थूलांशत्वेनानुगतम्"। न च सूक्ष्मैरेव तन्तुप्रभृतिभिः पटादिजननदर्शनादयं नियमः प्रत्यक्षविरुद्ध इति वाच्यम् । तत्रापि स्थूलांशस्यैव कार्पासादेर्दीर्घावस्थायां प्राप्तस्याकृतिविशेषसम्पादनार्थं खण्डशोऽवयवयोजने यः समुदायस्तस्यैवोपादानत्वमिति, ततः सूक्ष्मस्यैव पटादेरुत्पत्तेः । अन्यथा यन्त्रादुत्तारणे छेदस्तन्त्वादेर्न क्रियेत । यत्र तु प्रकारान्तरेण पटोत्तारणं तत्रापि समस्यैवोत्पत्तिर्न तु सूक्ष्मस्येत्यविरोधात्कारणतानुगमकरूपालोपाच्च । कुण्डलप्रतिमादावपि मणिसुवर्णलाक्षादिसमुदायस्यैवोपादानत्वमित्यन्यत्रापि तथैवोह्यम् । एवं गर्भादावपि बीजरजःसमुदायस्यैवोपादानता; कारणस्थूलता तु बहिस्तदंशदर्शनात्स्पष्टैव । एतेनाण्डजा अपि व्याख्याताः । स्वेदजा अपि स्थूलादेव स्वेदादुत्पद्यन्ते । उद्भिज्जास्तु प्रथममङ्कुरन्तीति बीजात्सूक्ष्मा एव, अत एव यावन्नोप्यन्ते तावदङ्कुरभाव एव तिष्ठतीति युज्यते । उप्तानां वृद्धिस्त्वाहारन्यायेन बोध्या, यत्र पुनर्लोहदारुदन्तनिर्यासादिभिः पर्यायेणावयवयोजनं गृहादौ चेष्टकादिभिस्तत्रापि पटन्याय

## आदित्यश्च नारायणः।

एव, अत एवास्यैकैवोपादानमिति निश्चयः। अन्यथा कारणगुणानां कार्यगुणारम्भकत्वात्कारणगतैकत्वैः प्रत्येकमेकत्वारम्भे कार्येऽनेकत्वप्रतीतिरनारम्भे तत्तद्गतैकत्वैरपेक्षाबुद्ध्या बहुत्वमेव प्रतीयेत नत्वेकत्वम्, अत एकस्यैकमेवोपादानमित्यवदातम्। किञ्च परमाणुकारणवादे कार्यस्य पाञ्चभौतिकत्वाज्जलादयः संयुक्ता भवन्तीति तेऽपि ततः पृथग्भूताः परमाणुत्वमापद्येरन्। न चैवमभ्युपगन्तुं शक्यम्, प्रत्यक्षविरोधात्, मृतकादौ तथाऽदर्शनात्। ननु परमाणुभ्यः सृष्ट्यनङ्गीकारे तदभ्युपगमस्य किमावश्यकत्वमिति चेदुच्यते—देहेन सहात्मन ऐक्यभ्रमस्य तत्कार्यत्वेन तदङ्गीकारस्यावश्यकत्वाद्धर्माधर्मसंस्कृतैस्तैरेव जीवदेहेन सहैक्यभ्रमात्। नन्वेवं सति पुञ्जात्पुञ्जोत्पत्तिपक्षापत्तिरिति चेत्, न; इष्टापत्तेः। "पीवेति राशौ न विदाम्प्रवादः" इत्यादिस्मृतौ शरीरे राशित्वकथनाद्भ्रमार्थमेव तदङ्गीकारात्। बहिर्दृश्यमानस्त्ववयवी तेभ्योऽतिरिक्त एव सङ्घातरूपत्वात्सामुदायिकश्चायमतो न काप्यनुपपत्तिः। ननु स्थूलात्सूक्ष्मोत्पत्त्यङ्गीकारे विभागादुत्पत्तिरङ्गीकृता भवति, तथा सति नाशः कस्मादङ्गीकार्य इति चेत्, संयोगादेवेति ब्रूमः। सत्कार्यवादिभिः प्रतिसञ्चरस्यैवाङ्गीकारात्। लोकप्रत्यक्षानुग्रहाय तु पाश्चात्यकार्याणामुभाभ्यां यथासम्भवं नाशोत्पत्ती। अत एव जलसंयोगेन वह्नेः कपालविभागाच्च घटस्य नाशः, तत्क्षणाद्दन्तचषकादेस्तन्तुसंयोगाच्च पटस्योत्पत्तिरिति सङ्गच्छते। ननु परमाणुभ्यः सृष्ट्यनङ्गीकारे स्थूलाच्चाङ्गीकारे मनसोऽपि सृष्टिर्न स्यात्तथा सति "ब्रह्मणो मानसाः पुत्राः" इत्यादिवाक्यविरोधापत्तिरिति चेत्, न; तस्य परमाणुपरिमाणत्वेऽपि परमाणुत्वाभावात्। अन्यथा परमाणूनां पञ्चविधत्वापत्तेः, भौतिकत्वे सति नित्यो गतिमान् परमाणुरिति वैशेषिकलक्षणं तु बाधितमेव। सर्गादौ भूतासिद्ध्या भौतिकत्वस्याशक्यवचनत्वात्। न च भूतत्वे सतीत्येवं विशेषणीयमिति वाच्यम्; तथात्वेऽपि नित्यत्वस्याशक्यवचनाच्छ्रुत्या स्मृतेर्बाधादिति दिक्। एवं परमाणुदेशेन कालपरमाणौ ज्ञाते ततः पुराणाद्युक्तरीत्या द्विपरार्धावधिराध्यात्मिको ज्ञेयः। इति कालो निरूपित इत्याहुः।

एवं कालमुक्त्वा तस्यादित्यगतिमेयत्वेन सूर्यमण्डलान्तस्थोऽपि स एवेत्यु-

**दिशश्च नारायणः । ऊर्ध्वं च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेद॰ सर्वम्,**

पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः", "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासन सन्निविष्टः । केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः", "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष स आत्मान्तर्याम्यमृतः" इति छान्दोग्याग्निपुराणबृहदारण्यकीयान्तर्यामिब्राह्मणवचनैर्निरूपित परब्रह्मस्वरूपो नारायण एव । न च शरीरादिकथनात्कश्चित्तादृशो जीव एव भविष्यतीति शङ्क्यम् । तत्र जडजीवाभ्यामन्तर्यामिणो भेदेनैव प्रतिपादनात् । भगवतः स्वरूपस्याप्राकृताकारत्वात् । विशेषपरिज्ञानायान्तस्तद्धर्मोपदेशाधिकरणभाष्यं तत्प्रकाशश्च द्रष्टव्यौ ।

दिगादीनामाह—दिशश्चेत्यादिना । निखिलप्रपञ्चस्य नारायणात्मकत्वं निगमय्य सर्वस्य तद्रूपत्वात्तस्य व्यापकत्वमाह—अन्तर्बहिश्च नारायण इति । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः", "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया", "अहमात्मा गुडाकेश सर्वभूताशयस्थितः", "देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः" इत्यादिमहानारायणोपनिषद्गीताभागवतवचनैस्तस्यैव सर्वत्र व्यापकत्वस्य स्फुटत्वात् ।

एतावता तस्यैव सर्वकर्तृत्वसर्वरूपत्वसर्वव्यापकत्वनिरूपणेनासत्कार्यवादं निरस्य पुनरपि मन्दमध्यमानामर्थे स्थूणानिखनन्यायेन तमेव सिद्धान्तं दृढयितुं पुरुषसूक्तोक्तप्रकारेण सत्कार्यवादमुपदिशति—नारायण एवेदं सर्वमिति । इदं सर्वं पुरोदृश्यमानमखिलं यादृशं दृश्यते तादृशं नारायण एव परं ब्रह्म तत्तद्रूपतयाऽऽविर्भूतमिति ब्रह्मविदाम्प्रतीतिः । अन्यथा प्रतीतिस्त्वविदुषाम् । न हि तया पदार्थास्तादृशा भवन्ति, सकामलानामामयापगमे इव । यतः "सर्वं खल्विदं ब्रह्म" इति श्रुतिरेव तथा निरूपयति । अत्र "इदमस्तु सन्निकृष्टे समीपवर्ति" इति वाक्यादिदं शब्दस्य प्रत्यक्षवाचकत्वेन श्रुतावपीदमि-

**यद्भूतं यच्च भाव्यम् ।**

**यम्** । अत्रैवकारोऽप्यन्यप्रकारकत्वव्यवच्छेदकः । भूतभविष्ययोराह—**यद्भूतं यच्च भाव्यमिति** । यच्चाग्रे सञ्जातं, यच्च भवति, भविष्यति च तत्सर्वं नारायणरूपमेवेति ब्रह्मवादः "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्" इति मन्त्रवर्णात् । भागवते तु "इदं हि विश्वं भगवानिवेतरो यस्मिञ्जगत्स्थाननिरोधसम्भवाः" इत्यत्र जगत्पश्यतामधिकारिणां त्रैविध्यमुदितम् । तत्र ये "इदं विश्वं भगवान्' इति पश्यन्ति त एवोत्तमाधिकारिणः, ये च 'इदं भगवानिव' इति पश्यन्ति ते मध्यमाधिकारिणः, ये च पुनः 'इदं विश्वं भगवानितरः' इति पश्यन्ति ते हीनाधिकारिणः । अत उत्तमाधिकारिणां भगवद्रूपत्वेनैव विश्वप्रतीतिरित्यवधेयम् । कर्तृत्वादिधर्मविशिष्टस्य लोके विकारित्वस्य तल्लिप्तत्वादिविशिष्टस्य च प्रतीयमानत्वेन परब्रह्मणोऽकर्तृत्वमेव वरमिति शङ्कापङ्कं क्षालयितुं ब्रह्मणः कर्तृत्वादेरप्राकृतत्वेन लोकन्यायस्य तत्र प्रवेष्टुमश-

---

इत्यर्थः । **पुरुष एवेदमिति** । यदिदं वर्तमानं जगत् तत्सर्वं पुरुष एव, यद्भूतमतीतकल्पादौ यज्जगद्यच्च भविष्यं कल्पान्तरेषु तदपि पुरुष एव । एवं च यथास्मिन्कल्पे वर्तमाना सर्वेऽपि पदार्था भगवदंशरूपास्तथैव पूर्वमासन् कल्पान्तरेष्वपि भविष्यन्ति चेति ज्ञेयम् । **इदं हीति** । प्रथमस्कन्धे पञ्चमाध्याये "इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवाः" । इति । "विश्वमनूद्य भगवत्त्वं विधीयते, तथा सति सर्वत्र भगवद्दृष्टिश्चेत्कृतार्थो भवतीति कार्यं भगवत्त्वेन निरूपितम् "सर्वं खल्विदं ब्रह्म तज्जलान्" इति श्रुतिः 'हि'शब्देन सूचिता । उत्तममध्यमाधमाधिकारिभेदेन त्रेधात्र निरूपणं कर्तव्यम् । तत्रोत्तमे निरूपितम् । मध्यमे त्वेवम्—**इदं विश्वं भगवानिव**, न तु भगवान् । तेनात्र सन्मननादिकं कर्तव्यं नाऽऽसक्तिरिति । निकृष्टे तु—**इदं विश्वम् भगवानितरः** अस्मादन्यः । अतः प्रपञ्चदर्शी बहिर्मुखो भ्रष्टो भवतीति । एवं प्रकारत्रयेण निरूपणीयम् । नन्वेकस्य जगतः कथं त्रिरूपत्वम्? तत्राह—**यतो जगत्स्थाननिरोधसम्भवा** इति । तत्र जगतः स्थितिर्भवत्येवेति भगवानेव जगतीति स्वाधारत्वाद्भगवतः, भगवानेव जगत् । मध्यमे तु भगवतः सकाशाज्जगदुद्भवः । तेन कार्यकारणयोस्तादात्म्यात्कार्यात्मना भेदः कारणात्मनाऽभेद इति "**भेदसहिष्णुरभेदस्तादात्म्यम्**" इति वचनाज्जगद्भगवानिवेति । मूढे तु भगवतः

## अथ निष्कलो, निष्कलङ्को, निरञ्जनो,

क्यत्वाद्ब्रह्मणश्च सर्वविरुद्धधर्माश्रयत्वेन श्रुतिशतैरुपदिष्टत्वाच्च, तस्य कर्तृत्वादि-विशिष्टत्वेऽप्यविकारित्वं निर्लेपत्वादिकं च सदावर्तमानमेवेत्युपदेष्टुं तस्याप्रा-कृतगुणान्निगमयति—निष्कल इति । लौकिककलाकलापरहितः, अप्राकृते निर्गुणे ब्रह्मणि कलादीनामप्यप्राकृतत्वात् । प्राकृतत्वे ब्रह्मणोऽपि प्राकृतत्वा-पत्तेः । सर्वथा कलादिराहित्ये चानेकश्रुतिबाधः प्रसज्यते । कथम्? इत्थम्—"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यत्र कलायाः, "आ-सीनो दूरं व्रजति शयानो याति सर्वतः" 'न तस्य कार्यं कारणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बलक्रिया च" इत्यादौ क्रियायाः, "अविनाशी वाऽरे अयमात्मा अनुच्छित्ति-धर्मा" इत्यत्र गुणस्य च स्पष्टमुक्तत्वात् । निर्लेपत्वे द्वितीयं हेतुं लक्षयति—निरञ्जन इति । मायानभिभूतः । तस्यास्तच्छक्तित्वात् । माया हि भगवतः शक्तिः, सर्वभवनसामर्थ्यरूपा "तस्मान्मायामेतां शक्तिं विद्याद्य एतां शक्तिं वेद स पाप्मानं तरति स मृत्युं तरति स संसारं तरति सोऽमृतत्वञ्च्छति महतीं श्रियमश्नुते" इति नृसिंहपूर्वतापिन्युपनिषच्छ्रुतेः । श्रुत्यर्थस्तु—तस्मा-दिति पूर्वोक्तकारणात्, मायाम्—"मायया च निषेवितम्" इत्यादिभागवत-वाक्येन मुख्यद्वादशशक्तिमध्यगणिताम्, एतां भगवदीयां शक्तिम् "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुत्यानन्तविधशक्तिविशिष्टस्य भगवतः सर्वभवन-सामर्थ्यरूपां शक्तिम्, विद्याज्जानीयात् । यो भक्तः, एतां भगवदीयां मायां शक्तिं भगवतः सर्वभवनसामर्थ्यरूपां वेद जानाति स भक्तः पाप्मानं तत्कृत-मोहाभावेनाघम्, तरति—उत्तीर्णो भवति । मायायाः शक्तित्वज्ञापनेन पाप-तरणरूपमेकं फलमुक्त्वा द्वितीयं प्रथयति—स मृत्युं तरतीति । "मृत्युर-त्यन्तविस्मृतिः" इति भागवतवाक्यनिरूपितात्यन्तस्वरूपविस्मारकं मृत्युं तरति । पाप्मतरणानन्तरं स्वरूपविस्मरणस्यानवकाशात् । एवं द्वितीयमुक्त्वा तृतीयमाह—स संसारं तरतीति । यो हि मायां भगवच्छक्तित्वेन जानाति,

निर्विकल्पो, निराख्यातः, शुद्धो, देव,

यः पूर्वोक्तफलत्रयविशिष्टो भक्तः सोऽमृतत्वं मोक्षाख्यं फलं गच्छति मुक्तिं प्राप्नोति। एवं मुक्तिपर्यन्तं फलचतुष्टयं प्रतिपाद्य भगवतः "मुक्तोपसृप्यव्यपदेशात्" इति वैयासन्यायेन मुक्तैरेवोपसृप्यत्वेन भजनानन्दानुभवार्थं भगवत्कृपयाऽलौकिकतनुप्राप्त्यनन्तरं महाराजोपचारादिना भगवतः सेवनाय सेवौपयिक्याः श्रियः प्राप्तिं निगमयति—महतीं श्रियमश्नुत इति। महतीं सेवौपयिकीं लक्ष्मीं प्राप्नोति इति श्रुत्यर्थः। निर्विकल्प इति। विकल्परहितः "यः सर्वज्ञः सर्ववित्" इति श्रुत्या तस्य स्वभावसर्वज्ञत्वात्। निष्कलङ्को निरञ्जनो निर्विकल्प इति त्रयं श्रीमत्पुरुषोत्तमचरणानां पण्डितकरभिन्दिपाले न दृश्यते। निराख्यात इति। वाचामगोचरः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इति श्रुत्या तस्य प्राकृतेन्द्रियाग्राह्यत्वात्। न च "अदृश्योऽग्राह्यः" इत्यादिवचनात्तस्य सर्वथाऽग्राह्यत्वे "मनसैवानु द्रष्टव्यम्" इति श्रुतौ मनसा "इत्थं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः। नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत्" इति भागवते च स्तुतिरूपवाचा ग्राह्यत्वस्य व्यक्तमुक्तत्वेन तद्विरोधापत्तेः। निर्दोषत्वं निगमयति—शुद्ध इति। मलविक्षेपाज्ञानादिसर्वदोषरहितः "सन्मात्रो नित्यः शुद्धो बुद्धो निरञ्जनः", "शुद्धोऽबाध्यस्वरूपः", "निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः। आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च त्रिविधभेदविवर्जितात्मा" इत्यादिश्रुतिपञ्चरात्रप्रमाणैस्तस्य स्वभावनिर्दुष्टत्वात्। य एतादृशः स एव देव इति निगमयितुं तस्य देवत्वं निरूपयति—देव इति। "दिवो दानाद्वा दीपनाद्वा द्युस्थानो वा भवतीति देवः" इति प्राह निरुक्तकारः। अथवा देवो दशविधलीलाविशिष्टः, सर्वभक्तोद्धारैकप्रयत्नवत्त्वात्। दशविधलीलाविशिष्टत्वं "सोऽश्नुते तु सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इतिश्रुत्या भक्तानां कामभोजनार्थं क्रीडाकरणात्, क्रीडायामेव जयेच्छाकरणात्, भक्तैः सह व्यवहारकरणात्, भक्तेषु स्वमाहात्म्येच्छादिद्योतनात्, "न पारयेऽहं निरवद्यसंयुजां स्व-

एको नारायणोऽस्ति न द्वितीयोऽस्ति कश्चन । य एवं वेद विष्णुरेव स भवति स विष्णुरेव भवति ।

स्वप्नेऽपि प्रियमेव पश्यन्तीति स्वप्नकरणाद्वा तन्निकटगमनाच्चेति श्रीमत्प्रभुचरणा निरूपयाञ्चक्रुः ।

तादृशस्वतन्त्रक्रीडाशील एक एवेत्युपदिशति—एको नारायणोऽस्तीति । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्या एकः समाधिकरहितो नारायणः "नारायणो वा इदमग्र आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमा स एकाकी नर एव" इति महोपनिषदुक्तमूलस्वरूपत्वात् । अन्यस्य तादृशत्वाभावख्यापनायाह—न द्वितीयोऽस्ति कश्चन इति । तद्भिन्नः कोऽप्यन्यस्तादृशो नास्ति, तस्य "एकमेवाद्वितीयं ब्रह्म" इति श्रुत्याऽद्वितीयत्वात् "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" इति श्रुत्या परात्परत्वाच्च । पूर्वोक्तं निखिलधर्मविशिष्टं नारायणाख्यं परं ब्रह्मेति ज्ञानवतः फलमुपदिशति—य एवं वेदेति । यो भक्त एतादृशधर्मविशिष्टं नारायणं वेद जानाति । ज्ञानानन्तरं तस्य किं भवतीत्याह—स विष्णुरेव भवतीति । स तादृशज्ञानवान्भक्तो विष्णुरेव "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति ब्रह्मसूत्रेण भगवदिच्छया तिरोहितानन्दस्य पुनराविर्भावेन "अहं

---

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति** । ब्रह्मसूत्रे तृतीयस्य द्वितीये पादे पञ्चमं सूत्रम् । तत्र जीवस्य भगवदंशत्वात्तत्रापि भगवदैश्वर्यैरपि भाव्यम्, तन्न सम्भवति, अत आह—**पराभिध्यानादिति** । भगवतोऽभिध्यानमभितो ध्यानं स्वस्यैतस्य च भोगेच्छा तस्माद्धेतोः, ऐश्वर्यादिकं तिरोहितं तेन च बन्धविपर्ययौ । तत्र, ऐश्वर्यतिरोभावात् दीनत्वम्—अन्यानुरञ्जनाभावात् । पराधीनत्वं च परोक्तकरणात् । वीर्यतिरोभावात्सर्वदुःखसहनम् । इदं चानुभवसिद्धम् । यशस्तिरोभावात्सर्वहीनत्वम् । "यथा पुष्पस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति, यथाऽसिधारां कर्तेव हितामवक्रामयेद्धुवेयुवे ह वा विह्वयिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत्" अत्र कर्मगन्धो यशः,

एतद्यजुर्वेदशिरोऽधीते ।

**ॐमित्यग्रे व्याहरेत्, नम इति पश्चात्, नारायणायेत्युपरिष्टात् । ॐमित्येकाक्षरम्, नम इति द्वे अक्षरे, नारायणायेति पञ्चाक्षराणि**

मनुरभवं सूर्यश्च" इति श्रुत्युक्तप्रकारेण व्यापनशीलो भवति "आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः । प्रतीयेरन्परिच्छेदा व्यापकत्वं च तस्य तत्" इति श्रीमदाचार्यचरणोपदेशात् । तदेतद्यथा तथोपपादितं "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रभाष्ये प्रकाशे चेति विशेषजिज्ञासुभिस्ततोऽवधेयम् । वीप्सात्र नैर्गुण्यसम्पत्तिरूपफलदार्ढ्यख्यापनाय । एतावदुपनिषद्भागस्य यजुर्वेदशिरोरूपत्वमाह—एतद्यजुरिति ।

नैर्गुण्यप्राप्त्यनन्तरं स्मर्तुं जप्तुं कीर्तयितुं सेवितुं च भगवतो नारायणस्य मन्त्रमुपासनञ्चाह—ओमिति । ओङ्कारोच्चारणं प्राक्, ततो नम इत्युक्त्वा नारायणायेति सततमावर्तयेत् । अष्टाक्षराणि गणयति—ओमिति । अष्टाक्षरस्य नारायणपदत्वं व्यनक्ति—एतदिति । न च नैर्गुण्यसम्पत्तिसिद्ध्यनन्तरं स्मरणाद्यर्थं मन्त्रस्य सेवनस्य च किम्प्रयोजनमिति शङ्क्यम् "मुक्तोपसृप्यव्यपदेशात्" इति सूत्रेण मुक्तैरेव भगवतः सेव्यत्वेन सिद्धान्तितत्वेन भगवत्सेवायाश्च "मधुद्विट्सेवानुरक्तमानसामभवोऽपि फल्गुः" भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः" इत्यादिवाक्यैर्मुक्तेर्गरीयस्त्वेन तस्याः फलरूपत्वेन च व्यक्त-

---

यस्कन्धे नवमाध्याये "युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणमीश्वरम्" इत्यत्र सुबोधिन्यां "ऐश्वर्यादयः षड्गुणा मूर्तिमन्तो भगवन्तमावेष्ट्य तिष्ठन्ति । ते चैश्वर्यादयो भगवदेकनिष्ठा नान्यत्राऽऽविष्टा भवन्ति । इतरत्र पार्षदादिषु अध्रुवैः । चकाराद्राजादिष्वपि । एतावता भगवच्छब्दप्रयोगः सर्वत्र । तथापि ध्रुवा ऐश्वर्यादयो भगवत्येव" इत्युक्तम् । **शास्त्रदृष्ट्येति** । तत्र कारण एव लय उक्तः । अतः पुनरपि तिरोहितानामैश्वर्याणां प्रादुर्भावः सम्भवति । **यजुरितीति** । "शेषे यजुःशब्दः" इति पूर्वतन्त्रीयन्यायेन "ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम्" इति तल्लक्षणम् । स्तोमाक्षरेष्वपि तत्त्वान्नातिव्याप्तिः । शेषपदेनर्क्सामभेदे बोधनीये तयोरनवृत्तौ तदुभयलक्षणानसन्धानाधीनमेतज्ज्ञानमिति प्रतिपत्तिगौरवम् । स्वतन्त्रलक्षणे त

**एतद्वै नारायणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येत्यनपब्रुवः सर्वमायुरेति,**

मुक्तत्वात् । "नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः", "परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान्" इत्यादौ निर्गुणगणगृहीतचेतस्त्वेन भगवतो निरूपणात् । तस्य सेवौपयोगिका प्राकृततनुसम्पादकत्वस्याप्यग्रे वक्ष्यमाणत्वाच्च । अतो निर्गुणा भगवत्स्मरणादौ स्वभावत एव प्रवर्तन्ते । ततो भगवत्कृपयाऽप्राकृततनुसिद्धिः । मन्त्रं लक्षयित्वा तदध्ययनफलं वक्तुमग्रिमं वदति—**यो ह वै नारायणस्येति** । यः पूर्वोक्तो निर्गुणो भक्तो नारायणस्य परब्रह्मणः **अष्टाक्षरं पदम्** अष्टाक्षरं मन्त्रं, **अनपब्रुवः** कपटरहितः सत्यवाक्, "सत्यं वद" इति श्रुतेः; **अध्येति** पठति स भक्तः **परमायुरेति** "भद्रं कर्णेभिः शृणुयाम देवाः, भद्रं पश्येमाक्षिभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः", "तज्जन्म तानि कर्माणि तदायुस्तन्मनोवचः । नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः" इति श्रुतिभागवतप्रतिपादितं भगवत्सेवौपयिकमायुः प्राप्नोति, भगवदीयानां फलविलम्बहेतुभूतस्य चिरजीवितत्वस्यानपेक्षणात् । इदं यथा तथोपपादितं मया गोपालपूर्वतापिनीभाष्ये पीयूषलहर्यां च श्रुतिव्याख्यान एवेति ततोऽवगन्त-

---

म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः" इति श्रुतेर्वाग्योगविदध्येति पठति गुरूपसत्तिपूर्वकं स वक्ष्यमाणं फलं विन्दतीत्यर्थः । अध्येतीति पदेन सद्गुरुशरणगमनपूर्वकत्वं द्योत्यते । यतः खल्वयमष्टाक्षरो मन्त्रः । गुरूपसत्तिरहितानां फलाभावस्तु शास्त्रेषु प्रसिद्ध एव । विस्तरस्तु "उपदेशशङ्कानिरासवादे", "उपदेशमीमांसायां" च द्रष्टव्यः ।

**सर्वमायुरेतीति** । सर्वं पूर्णम् । तत्र श्रुतिं प्रमाणयन्ति—**भद्रमिति** । देवहितम्, तृतीयासमासः । देवेन दशविधलीलाविशिष्टेन श्रीपूर्णपुरुषोत्तमेन । हितं स्थापितं तत्सेवोपयिकम् । तच्चायुः "शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषतायुर्गन्तोः" इति मन्त्रोक्तमेव । तेनाल्पायुष्ट्वनिरासेन दीर्घकालं भगवत्सेवामेवेच्छन्ति भक्ता इति ध्येयम् । "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।

विन्दते प्राजापत्यं रायस्पोषं गौपत्यम् ।

व्यम् । द्वितीयं फलं विशिनष्टि—प्राजापत्यमिति । प्रजापतिर्ब्रह्मा तस्यैश्वर्यं पारमेष्ठ्यमैश्वर्यं प्राप्नोति । तृतीयं लक्षयति—रायस्पोषमिति । रायस्पोषं धनरक्षकत्वम्, नैर्गुण्यसिद्ध्यनन्तरं तत्कृपालब्धधनस्य तत्सेवेतरत्राविनियोजको भवति । महाराजोपचारादिषु तस्यापेक्ष्यत्वेन तदर्थमेव भगवता वितीर्णत्वात्, निर्गुणानां लौकिकभोगासम्भवाच्च । रायस्पोषमिति प्रयोगश्छान्दसः । यद्यपि "न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत्", "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः", "मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुतम्" इत्याद्यनेकवचनैर्निर्गुणभक्तानां भगवत्स्वरूपेतरानपेक्षत्वेऽपि "हृतात्मा हृतप्राणाँश्च भक्तिरनिच्छतोऽपि गतिमण्वीं प्रयुङ्क्ते" इत्यादिवाक्यैर्भक्तिस्वभावादेव प्राप्यते । परं न ते तत्र रमन्ते तदीयं तदर्थमेव नियुञ्जते । न चेदमुपासनमपि कामनापरमिति शङ्क्यम् । प्रथमं भगवन्माहात्म्यज्ञानेन "स विष्णुरेव भवति" इति श्रुत्यैव तस्य निर्गुणत्वमुपदिश्यावृत्त्या मुहुर्दृढीकृत्य च ततो निर्गुणजीवकर्तव्यत्वेनोपासनस्योपदिष्टत्वेनाशाप्राप्तसविषयकज्ञानरूपमनोवृत्तित्वलक्षणस्य तादृशजीवविषये सर्वथाऽसम्भाव्यत्वेनास्य भक्तिरूपत्वात् । न हि नामसाम्यमात्रेण काचित्क्षतिः । चतुर्थं फलं स्पष्टयति—गौपत्यमिति । गोधनवान्भवति । तस्य भगवदुपयोगित्वात् । अथवा गाव इन्द्रियाणि तेषामधीशत्वं गोस्वामित्वं प्राप्नोति । तत्तु विषयानभिमुखत्वपूर्वकेन्द्रियाणां भगवत्स्वरूपैकपरत्वसम्पादनसामर्थ्यवत्त्वम् । तत्प्रकारश्च यथा तथोपपादितो भागवतेऽम्बरीषप्रसङ्गे "स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये । मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गम् । घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्यां रसना तदर्पिते । पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने । कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः"

ततोपासनयाऽमृतत्वमश्नुते, ततोऽमृतत्वमश्नुत इति।

एवं फलचतुष्टयं प्रतिपाद्य तैस्तैः पदार्थैर्भगवतो भजनं तत्फलं चोपपादयति—ततोपासनयेति। फलचतुष्टयलाभानन्तरमुपासनया भगवतः सेवनया। फलमाह—अमृतत्वमश्नुत इति। मरणधर्मरहितं साक्षाल्लीलोपयोग्यप्राकृतं देहं व्याप्नोति। न चात्राप्राकृतदेहविषये मानाभावः शङ्क्यः। श्रीमद्भागवत एव "देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्" इत्यत्र देहेन्द्रियासुहीनत्वप्रकटनेन लौकिकदेहाभावस्य स्फुटमुक्तत्वात्, वैकुण्ठपुरवासित्वख्यापनेनाप्राकृतस्यापि तस्य साग्रहं प्रतिपादितत्वाच्च। न हि प्राणाद्यभावेन कथं देहस्यैव सम्भव इति वाच्यम्। अलौकिकस्य भगवच्चरणरेणुजत्वेन तस्मिन्प्राणादिरूपेण ब्रह्मण एव स्थितेस्तैत्तिरीयोपनिषदि सिद्धान्तितत्वात्। तथा हि—तत्र "आत्मत आविर्भावतिरोभावौ", "स आत्मानं स्वयमकुरुत" इत्यादिश्रुत्युक्तात्मरूपसृष्टावन्नमयत्वादीनि विज्ञानमयान्तानि भगवतो विभूतिरूपाणि निरूप्यन्ते। अतस्तादृशभक्तदेहेऽन्नमयत्वादिचतुर्धाप्रकारेण प्रविश्याप्राकृतभक्तैरानन्दमयः परमात्मा क्रीडतीति निगमनान्नालौकिकविग्रहे कापि बाधप्रसक्तिः। न चात्रान्नमयादारभ्यानन्दमयान्तानां जीवकोशत्वं विभावनीयम्। जीवकोशरूपाणामेतेभ्यः पार्थक्येन निरूपणात्। नन्विदं विसम्वादीव भातीति चेत्, शृणु, बृहन्नारायणोपनिषदि "अन्नमय आत्मा मे शुद्ध्यन्ताम्" इत्यारभ्य "आनन्दमय आत्मा मे शुद्ध्यन्ताम्" इत्यन्तं शोध्यत्वलिङ्गकानां पञ्चानामपि सर्वत्र "मे"इत्युक्त्वा प्रतिशरीरं भिन्नतयोपदिष्टत्वात्। इह तु सर्वत्रैकस्यैव सर्वरूपत्वनिरूपणेन चतुर्णां विभूतिरूपत्वस्यानन्दमयस्य च परब्रह्मत्वस्य बाधायोगाच्च। युक्तं चैतत्। अन्नमयानि विभूतिरूपाणि प्राप्य "एतमानन्दमयमात्मानमुपसङ्क्रामति" इति श्रुत्या जीव आनन्दमयो भूत्वाऽऽनन्दमयं ब्रह्म प्राप्नोति। अन्नमयादिप्राप्तेरपि "अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसङ्क्रामति" इति श्रुतौ मर्त्यलोकातिक्रमणानन्तरमेव श्रावितत्वेनैतेषां जीवकोशरूपत्वस्यासम्भाव्यत्वात्। श्रुत्यन्तरे च "अन्नात्प्राणा भवन्ति

एतत्सामवेदशिरोऽधीते ।

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपं पश्यति ।

भूतानां, प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिः, स वा एष पुरुषः, पञ्चधा पञ्चात्मा येन सर्वमिदं प्रतिष्ठितम् । पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशश्च स वै सर्वमिदं जगत् सभूतं सभव्यम्" इत्यादिनाऽन्नादि-पञ्चविधस्योक्तरीत्या पञ्चात्मकस्य पुरुषस्य सर्वप्राप्तिसर्वात्मकत्वबोधनपूर्वकं "ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्" इत्यनेन तज्ज्ञा-नवतां मुक्तिनिरूपणेन जीवकोशानामेतेभ्यः पार्थक्यस्य सिद्धावेषां चतुर्णां च विभूतिरूपत्वे पञ्चमस्यानन्दमयस्य परमात्मत्वे बाधकानुपस्थित्या लीलास्थ-भक्तानामप्राकृतदेहविषये नावकाशः कस्यापि शङ्काकलङ्कानुगमस्येति दिक् । अत्र विशेषजिज्ञासुभिरानन्दमयाधिकरणं चिन्तनीयम् । एतावदुपनिषद्भागस्य सामवेदशिरोरूपत्वं निगमयति—एतदिति ।

अमृतत्वलाभानन्तरं यद्भवति तदुपदिशति—प्रत्यगानन्दमिति । अप्रा-कृतविग्रहविशिष्टदिव्यभक्तप्रत्यक्षानन्दमात्रकरपादमुखोदरादिस्वरूपम् । गौणं वा तद्भवेदिति शङ्कां परिहरति—ब्रह्मेति । सर्वाधिकत्वाद्ब्रह्म "एकमेवाद्वितीयं ब्रह्म" इति श्रुतिनिरुक्तं सजातीयादित्रिविधभेदशून्यम् । तस्य भक्तपापनाश-कत्वात्तत्त्वं व्याकरोति—पुरुषमिति । "सर्वान्पाप्मन औषत्तस्मात्पुरुषः" इति बृहदारण्यकीयपुरुषविधब्राह्मणोक्तस्वरूपम् । तस्य भक्तमनोरथपूरकत्वं व्यन-क्ति—प्रणवमिति । प्रकर्षेण नवः प्रणवस्तमिति व्युत्पत्त्या भक्तानां नित्यनू-तनमनोरथपूरणाय नित्यनवस्वरूपं "क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रम-णीयतायाः" इति वाक्यात् । तस्य साक्षात्कारमुपदिशति—पश्यतीति । पूर्व-निरूपितं दिव्यदृशैकदृश्यं त्रिविधभेदशून्यमानन्दाकारं पुरुषं नित्यनवस्वरूपं रामणीयकधाम, आसेचनकया दृशा भगवन्तं दृग्विषयीकरोति । "तदा-

अकार उकारो मकार इति । ता अनेकधा समभवत तदेत-दोमिति । यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ।

अथ ॐनमो नारायणायेति जपन्नुपासको वैकुण्ठभुवनं

सेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शने" इति वाक्यात्ततो नेत्रं न परावर्तते । स्वरूप-स्यैव तथात्वात् । तदैव च सकलबन्धनिवृत्तिः "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति श्रुतेः ।

प्रासङ्गिकमोङ्कारस्य नामसृष्टित्वं कथयति—अकार इति । अनेकवर्णात्मकत्वं निरूपयति—ता इति । मात्राः । वर्णानां तद्रूपत्वमाह—तदेतदिति । यथे-दमखिलं जगद् ब्रह्मरूपं तथा सर्वमपि वर्णजातमोङ्काररूपमेव "वेदः प्रणव एवाग्रे" इति वाक्यात् । एतेन नामरूपात्मकप्रपञ्चकर्तृत्वं मायादिसम्बन्धर-हितस्य ब्रह्मण एवेति सिद्धान्तितम् । प्रणवोच्चारफलं लक्षयति—यमिति । यं शास्त्रबोधितं प्रणवमुक्त्वोच्चार्य । योगीति । प्रणवप्रतिपाद्ये भक्तमनोरथपू-रकस्वरूपे निरुद्धचेताः । जन्मसंसारबन्धनादिति । जन्म च संसारश्च जन्मसंसारौ तयोर्बन्धनं तस्मात् । मुच्यत इति । मुक्तो भवति । मुहुर्न तौ प्रतिबन्धकौ भवत इति यावत् ।

एवं प्रासङ्गिकं प्रतिपाद्य कृतभगवत्साक्षात्कारस्य यद्भवति तदुपदिशति—अथों नमो नारायणायेति । प्रासङ्गिकाद्भिन्नप्रक्रमत्वसूचनायाथेति । ॐ नमो नारायणायेत्यष्टाक्षरं जपन् । उपासक इति । कृतभगवत्साक्षात्कारः संयोगे भगवत्सेवां कुर्वन् । वैकुण्ठेति । विगताकुण्ठासात्त्विकादिगुण-त्रयकृतरोधो यस्मात्तद्विकुण्ठं विकुण्ठमेव वैकुण्ठम् "मन्निकेतं तु निर्गुणम्" इति भगवद्वाक्यान्निर्गुणमिति यावत् । भुवनमिति । वैकुण्ठाख्यं परं

गच्छति । तदिदं पुण्डरीकं विज्ञानघनं तस्मात्तडिदाभमात्रम् ।

ब्रह्मणः "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः", "न तद्भासयते सूर्यो न शशाङ्को न पावकः ।", "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति श्रुतिगीतावाक्यैर्लक्षितं धाम । गच्छतीति । निरस्तसमस्त-बन्धो भगवन्निकेतनं प्रयाति । धामस्वरूपं संक्षेपेणाह—तदिदमिति । तत् "ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदु-रुगायस्य वृष्णः परमं पदमवभाति भूरि", "अव्यक्तोऽक्षर इत्याहुस्तमाहुः परमां गतिम्", "यं प्राप्य न निवर्तन्ते तद्धाम परमं मम" इति वाक्यैर्वेदगीतादि-शास्त्रप्रसिद्धम् । इदं दिव्यदृष्टिमद्भक्तजनप्रत्यक्षम् "दिवीव चक्षुराततम्", "सदा पश्यन्ति सूरयः" इति श्रुतेः । तस्य स्वरूपमाह—पुण्डरीकमिति । कमलाकारं हृदि प्रवेशे तु अप्राकृतभक्तहृदयस्यैव कमलरूपत्वं "दहरं पुण्डरीकं वेश्म" इति श्रुतौ "दहर उत्तरेभ्यः" इति व्याससूत्रे च तथैव निरूपणात् । भवद्धेम्नो लौकिकगृहादिवज्जडत्वं निवारणायाह—विज्ञानघनमिति । "प्र-ज्ञानं ब्रह्म" इति श्रुतिनिरूपितं सच्चिदानन्दकं तैत्तिरीयोपनिषन्निरूपितं गणि-तानन्दस्वरूपम् । ज्ञानघनत्वादेव तस्याचिरांशुलताप्रभत्वं प्रथयति—तस्मा-त्तडिदाभमात्रमिति । यतो ज्ञानघनं तस्माद्विद्युत्प्रभं स्वयंप्रकाशरूपम् ।

---

तद्विष्णोरिति । यदानन्दमयं ब्रह्मणः पदं सदा पश्यन्ति सूरयो भक्ता वेदान्तज्ञान-रहस्यसम्पुटाः "ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः परः" इति श्रीमदाचार्यचरणोक्तेः । तच्च वैकुण्ठाख्यं धामाक्षरब्रह्मस्वरूपमिति निरूपयन्ति—न तदिति । "चैद्ये च सात्वतपते-श्चरणं प्रविष्टे" इति भागवतवाक्यात्पदभूतं "प्रभुत्वेन हरेः स्फूर्तौ लोकवत्त्वेन तूद्भवः" इति निबन्धीयवाक्यात् लोकात्मकत्वेन च प्रसिद्धं लोकप्रसिद्धाः सूर्यादयो न भासयन्ते यद्गत्वा च योगिनो न निवर्तन्ते तत्परमं सर्वोत्कृष्टं मम पुरुषोत्तमस्य धाम परमं ज्योतीरूपं सर्वप्र-काशकमध्यात्मज्ञानस्वरूपं "न यत्र माया" इति निरूपणान्ममाधिष्ठानभूतं सर्वात्ममूलं निरु-पममहिमात्मकं ज्ञेयम् । तदेव श्रीमद्गोकुलमपि "गोकुलं वनवैकुण्ठम्" इति श्रुतेः "भमा-

**ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः। ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरुच्यते इति।**

"न तत्र सूर्यो भाति", "न तद्भासयते सूर्यो न शशाङ्को न पावकः।" इत्यादिशास्त्रप्रामाण्यात्। भगवद्धामस्वरूपमुपदिश्य तद्धामवासिनं "आपो नारा इति प्रोक्ताः" इत्यादिवाक्यविषयरूपाद्भागवतादौ नरभूजलायनत्वेनोपदिष्टाश्चांशरूपत्वाद्व्यावर्तयितुं मूलस्वरूपं नारायणं ब्रह्मत्वेनोपदिशति—ब्रह्मण्य इति। ब्रह्मैव ब्रह्मण्यः परात्परः "अक्षरात्परतः परः" इति श्रुतेः। तमेव विशिनष्टि—देवकीपुत्र इति। "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम्। श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम्। महार्हवैदूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम्। उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत", "वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः" इत्यादिवचोभिरुपदिष्टकृष्णस्वरूपः। श्रीमदाचार्यचरणा अपि दशमसुबोधिन्यां "यथा पूर्णेन्दुप्राकट्यास्थानं प्राच्येव तथा पूर्णशक्तेः पुरुषोत्तमस्य प्राकट्यस्थानं देवक्येवेति सिद्धान्तः" इत्याज्ञापयाञ्चक्रुः। मधुसूदनरूपत्वमाह—**ब्रह्मण्यो मधुसूदन** इति। ब्रह्म ब्रह्मा तस्य मोहाभावप्रदानेन हितकर्ता ब्रह्मण्यः। तादृशो भजनप्रतिबन्धदूरीकरणाय मधुनाम्नोऽसुरस्य सूदनः संहारकः, भक्तवत्सलत्वात्। तस्य कमलनयनत्वमाह—ब्रह्मण्यः पुण्डरीकाक्ष इति। ब्रह्म वेदस्तस्य हयग्रीवनमासुरहरणसमये पुनरानयनेन हितकर्ता ब्रह्मण्यः। तादृशः पुण्डरीकाक्षः कमलनयनः, यथा कमलं स्वभावतस्तापहारी तथायमपि चिरविरहतापसन्तप्तमानसानां भक्तानां स्वदृगन्तपातेन त्रिविधतापापनोदनसमर्थो भक्तदुःखासहिष्णुत्वादिति स्फुटयितुमत्र पुण्डरीकाक्षत्वनिरूपणम्। सर्वप्रवेशस्थानत्वमाह—ब्रह्मण्यो विष्णुरिति। तादृशो विष्णुः सर्वदेवाद्यारभ्यापिपीलिकान्तस्य प्रपञ्चस्य प्रवेशस्थानम् "सर्वे देवाः संविशन्तीति विष्णुः", "परे देवे सर्व एकाकीभवन्ति" इति श्रुतेः। तस्य च्युति-

**सर्वभूतस्थमेकं वै नारायणं, कारणं, पुरुषं, अकारणं, परं ब्रह्म इति। य एवं वेद नारायणसायुज्यमवाप्नोति,**

रहितत्वमाह—अच्युत इति। सर्वदैकरसः, आप्तकामत्वात्। एवं स्वरूपं निरूप्य तद्धर्मानाह—सर्वभूतस्थमिति। पूर्वं ब्रह्मण्य इति श्रुत्या प्रकाशितं सर्वभूतेषु विराजमानं "अन्तर्बहिश्च यत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः। अद्वितीयत्वं लक्षयति—एकमिति। "एकमेवाद्वितीयं ब्रह्म", "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतिभ्याम्। एतावदुपनिषत्प्रतिपाद्यगुण-वत्त्वं निगमयति—वै नारायणमिति। निश्चयेन नारायणाख्यं मूलपुरुषं, तदितरत्र तथा बुद्धिभ्रान्तानामित्युद्घाटनाय "वै" इत्यव्ययस्य श्रुतावुपादा-नम्। पुनरपि धर्मानाह—कारणमिति। त्रिविधस्यापि जगतोऽभिन्ननिमि-त्तोपादानकारणम्। निराकारत्वनिवारणायाह—पुरुषमिति। तस्य कारणा-भावमुपदिशति—अकारणमिति। स्वकारणरहितम्, अजत्वम्। परमकाष्ठा-पन्नत्वं व्यनक्ति—परं ब्रह्मेति। गणितानन्दादक्षरात्परमगणितानन्दं ब्रह्मैव। एवं भगवन्माहात्म्यज्ञानेन निर्गुणो भवति, ततः स्मरणकीर्तनादिना सेवया चाप्राकृतं देहं प्राप्नोति, ततो भक्त्या भगवन्तं पश्यन्ति, ततो वैकुण्ठं गच्छती-त्येवं वैकुण्ठगमनपर्यन्तप्राप्तकक्षस्य ब्रह्मस्वरूपज्ञानेन यद्भवति तदाह—य इति। पूर्वोक्तां कक्षामापन्नो भक्तः। एवं पूर्वोक्तप्रकारकस्वरूपं नारायणं वेद जानाति। भगवत्स्वरूपज्ञानिनः फलमुपदिशति—नारायणसायुज्यमवाप्नो-तीति। नारायणस्य परब्रह्मणः "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति तैत्तिरीयश्रुतिनिरूपितं विविधरसभोगचतुरेण ब्रह्मणा सह सर्वकामाशन-रूपं सायुज्यं लभते। तेन "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहो

---

श्रुतेः। सर्वभूतस्थमितीति। "सर्वभूतस्थमात्मानम्" "सर्वभूतस्थमेकं नारायणम्"

श्रीमन्नारायणसायुज्यमवाप्नोति । एतदथर्वशिरोऽधीते । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । सायम्प्रातरधीयानो पापोऽपापो भवति । मध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते । सर्ववेदपारायणपुण्यं लभते । इत्युपनिषत् ॥

भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा" इति निबन्धीयकारिकया श्रीमदाचार्यचरणैर्निर्णीत एव सकलवेदान्तसिद्धान्त इति सुधीभिर्विज्ञेयम् । आवृत्तिरत्रेतः परं फलाभावबोधनाय । एतावदुपनिषद्भागस्याथर्वशिरोरूपत्वं निगमयति—एतदिति । अस्या उपनिषदः पाठफलं निरूपयति—प्रातरिति । अग्रे स्पष्टम् ॥

## समाप्तिमङ्गलम् ।

न मे निष्ठा मोक्षे न च विविधभोगे न च गृहे
कलत्रे वा राये न च मणिमये भूषणगणे ।
परं काङ्क्षे कामं कमलनयनं कामकदनम्
घनश्यामं वामं भजतु भजनीयं मम मनः ॥ १ ॥

वाणी ते गुणवर्णने च रसनाप्युच्छिष्टभोगे सदा
बाहू मन्दिरमार्जनादिषु पुनः सङ्गस्त्वदीयैश्च मे ।
चक्षुस्त्वन्मुखदर्शने तुलसिकामोदे च नासा यथा
भूयात्ते भजने तथा कुरु दयां श्रीकृष्णचन्द्रप्रभो ! ॥ २ ॥

---

**महापातके**ति । "नाम्नोऽस्ति यावती शक्तिर्नामनिर्हरणे विभोः । तावत्कर्तुं न शक्नोति पातकं पातकी जनः" इत्युक्तेः । **वेदपारायणे**ति । यं यं कामयते कामं तं तं वेदेन साधयेत् । असाध्यं नास्ति यत्किञ्चिद्ब्रह्मणो हि फलं महत्" इति वाक्यात् । "संहिता नयते सौर्यं पदं च शशिनः पदम् । 'क्रमश्च नयते सूक्ष्मं यत्तत्पदमनामयम्" इति श्रीयाज्ञवल्क्यवाक्योक्तं

स्वबालचपलालापश्रवणोत्सुकमानसाः ।
कृपयन्तु निजाचार्या मायाद्वततमोहराः ॥ ३ ॥
केनाऽपि न निरुद्धोऽहं निजाचार्यकृपाबलात् ।
यत्सत्यं भयराहित्याद्विवृतं स्फुरितं हृदि ॥ ४ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रचन्द्रिकाच्छिन्नस्वान्तध्वान्तस्य तद्दासस्य श्रीमद्गोस्वामिमुरलीधरतनुजनुषः शुद्धाद्वैतकेसरि-शुद्धाद्वैतभूषण-शुद्धाद्वैतसहस्रांशु-शुद्धाद्वैतवाचस्पति-वेदान्तसुधाकर-वेदान्तविद्यालङ्कार-पण्डितेन्द्र-पण्डितमण्डलेश्वर-सर्वतन्त्रस्वतन्त्रेत्यादिविरुदालङ्कृतस्य गोस्वाम्यनिरुद्धस्य कृतौ श्रीमदाथर्वणनारायणोपनिषदो वेदान्तविद्यालङ्काराख्यं भाष्यं समाप्तिमगमत् ।

---

इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥

श्रीकृष्णचरणद्वन्द्वं वागीशवचनं तथा ।
निधाय हृदये व्याख्या यथामति कृता मया ॥
भवेदियं चेद्विदुषां लेशतो मोदहेतवे ।
मंस्ये सौभाग्यमेतद्धि यतस्ते सारभोगिनः ॥
श्रावणस्यासिते पक्षे एकादश्यां बुधे दिने ।
सप्ताष्टग्रहभूवर्षे पूरिता किरणावली ॥

**इति श्रीमदखण्डभूमण्डलाचार्यचक्रवर्तिजगद्गुरुश्रीमद्वल्लभाचार्यचरणकमलसेवानुरक्तमानसेन विद्यावागीशश्रीमदनिरुद्धाचार्यचरणाश्रितेन शुक्लोपनाम्ना श्रीमदोङ्कारजिच्छर्मतनुजनुषा हरिशङ्करेण कृता वेदान्तविद्यालङ्कारकिरणावली सम्पूर्णतामाप ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**